श्रीहरि:

ॐ सुरभ्यै नमः

# गोपूजनम्-गोपुच्छतर्पणम्

(गोसहस्रनामस्तोत्रम्-श्रीसुरभ्यष्टोत्तरसहस्रनाममालिका)

गवेषक:

## गङ्गाधरपाठकः मैथिलः

पथमेरागोधाममहातीर्थम्

सम्पादकः

श्रीसुरेशराजपुरोहितः

प्रकाशकः

पथमेरागोधाममहातीर्थम्

राजस्थानम्

# अथ सवत्सगोपूजनम्

**पूजनकर्त्ता कृतनित्यक्रिय: पूजनसामग्रीं सम्पाद्य कुशकम्बलाद्यासनोपरि पूर्वाभिमुख उपविश्य, पवित्रीधारणपूर्वकं पवित्रीकरणं दीपप्रज्वालनम् आचमन-प्राणायाम-दिग्रक्षणादिकं च विधाय स्वस्तिवाचनं कृत्वा सिद्धिबुद्धिसहितं गणपतिं च ध्यात्वा त्रिकुशजलादिभि: संकल्पपूर्वकं यथोपचारै: सवत्सां गोमातरं पूजयेत्-** पूजनकर्ता सन्ध्या आदि नित्यकर्म से निवृत्त हो गोपूजन की सामग्री को व्यवस्थित करके कुश-कम्बल आदि के आसन पर पूर्वाभिमुख बैठकर पवित्रीधारण, पवित्रीकरण, दीपप्रज्वालन, आचमन, प्राणायाम तथा दिग्रक्षणादि करके स्वस्तिवाचनपूर्वक सिद्धि-बुद्धिसहित गणपति का ध्यान करे । पुन: त्रिकुश-जल आदि से संकल्प करके यथोपलब्ध उपचारों से सवत्सा गोमाता का पूजन करे । स्त्रियाँ एवं बिना शिखा-यज्ञोपवीत वाले द्विज या द्विजेतर पुरुष ॐ के स्थान में **नम:** या **श्री** शब्द का उच्चारण करे ।

## आचमनम्

**ॐ केशवाय नम: । ॐ नारायणाय नम: । ॐ माधवाय नम: ।**

**ओष्ठप्रक्षालनम्- ॐ गोविन्दाय नम: । हस्तप्रक्षालनम्- ॐ हृषीकेशाय नम: ।**

## पवित्रीकरणम्

**ॐ अपवित्र: पवित्रो वा सर्वावस्थां गतोऽपि वा ।**
**य: स्मरेत् पुण्डरीकाक्षं स बाह्याभ्यन्तर: शुचि: ।।**

**ॐ पुण्डरीकाक्ष: पुनातु । ॐ पुण्डरीकाक्ष: पुनातु । ॐ पुण्डरीकाक्ष: पुनातु ।**

## संकल्प:

**ॐ अद्य अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्र: अमुकशर्मा (वर्मा, गुप्त:) सपत्नीकोऽहं गोभक्तिप्राप्तिपूर्वकं निखिलगोवंशस्य संरक्षण-संवर्द्धनद्वारा स्वस्य सकलपरिवारकुटुम्बस्य सर्वविधकल्याणार्थं यथोपचारै: सवत्सगोपूजनं करिष्ये ।**

**तदनन्तरं प्रार्थनापूर्वकं स्वपुरत: प्राङ्मुखस्थितां सवत्सां गां पूजयेत् (गोरुत्तरतो वत्सावस्थानम्)-**

तदनन्तर प्रार्थनापूर्वक सामने पूर्वाभिमुख स्थित सवत्सा गौ का पूजन करे । (सवत्स गोपूजन में पूर्वाभिमुख गौ के उत्तर भाग में वत्स को अवस्थित करना चाहिये।)

## मानसोपचारपूजनम्

**गां ध्यात्वा मानसोपचारैस्तां पूजयेत् ।**

गोमाता का ध्यान करके मन से ही सभी उपचारों को समर्पित कर पूजन करे । मानसपूजा से चित्त एकाग्र और सरस हो जाता है, इससे बाह्य पूजा में भी आनन्द की अनुभूति होती है ।

गन्धम्- **ॐ लँ पृथिव्यात्मकं गन्धं परिकल्पयामि ।** पुष्पम्- **ॐ हँ आकाशात्मकं पुष्पं परिकल्पयामि ।** धूप:- **ॐ यँ वाय्वात्मकं धूपं परिकल्पयामि ।** दीप:- **ॐ रँ वह्न्यात्मकं दीपं परिकल्पयामि ।** नैवेद्यम्- **ॐ वँ अमृतात्मकं नैवेद्यं परिकल्पयामि ।** सर्वोपचारा:- **ॐ सौं सर्वात्मकान् सर्वोपचारान् परिकल्पयामि ।** इति मानसोपचारपूजनम् ।

## हृदयादिन्यासः

ॐ सुँ हृदयाय नमः । ॐ रँ शिरसे स्वाहा । ॐ भ्यैं शिखायै वषट् ।
ॐ नँ कवचाय हुम् । ॐ मँः नेत्राभ्यां वौषट् । ॐ सुरभ्यै नमः अस्त्राय फट् ।

## करन्यासः

ॐ सुँ अंगुष्ठाभ्यां नमः । ॐ रँ तर्जनीभ्यां नमः । ॐ भ्यैं मध्यमाभ्यां नमः । ॐ नँ अनामिकाभ्यां नमः । ॐ मँः कनिष्ठिकाभ्यां नमः । ॐ सुरभ्यै नमः करतलकरपृष्ठाभ्यां नमः ।

ततः प्रथमं गोमुखदेशादारभ्य गोचतुर्दिक्षु धारां दद्यात् ।

**धारादानम्-** या लक्ष्मीः सर्वलोकेषु या च देवेष्वस्थिता । धेनुरूपेण सा देवी मम पापं व्यपोहतु ।। ॐ सवत्सगव्यै नमः धारां समर्पयामि । अनेन धारां कृत्वा यथाशक्ति वस्त्रालंकारादिभिः सवत्सां गामलंकृत्य ध्यायेत् । **ध्यानम्-** यया सर्वमिदं व्याप्तं जगत्स्थावरजंगमम् । तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ।। पंच गावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः ।। क्षीराब्धिसम्भवे देवि मुक्तादामविराजिते । सुधारूपे हव्यभुंक्ते नमोऽस्तु सुरवन्दिते ।। ॐ सवत्सगव्यै नमः ध्यानं समर्पयामि । **आवाहनम्-** आवाहयाम्यहं देवीं गां त्वां त्रैलोक्यमातरम् । यस्याः स्मरणमात्रेण सर्वपापैः प्रमुच्यते ।। ॐ सवत्सगव्यै नमः आवाहनं समर्पयामि । **आसनम्-** सुरभे सर्वभूतानां धारिके विश्ववन्दिते । पवित्रे निर्मले देवि आसनं प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः आसनं समर्पयामि । **पाद्यम्-** सौरभेयि सर्वहिते पवित्रे पापनाशिनि । गृहाणैतन्मया दत्तं पाद्यं त्रैलोक्यवन्दिते ।। ॐ सवत्सगव्यै नमः पाद्यं समर्पयामि । **अर्घ्यम्-** सर्वदेवमयी देवि सर्वतीर्थमयी शुभे । गृहाणार्घ्यं मया दत्तं सौरभेयि नमोऽस्तुते ।। ॐ सवत्सगव्यै नमः अर्घ्यं समर्पयामि । **आचमनम्-** देहे स्थिताऽसि रुद्राणि शंकरस्य सदा प्रिये । धेनुरूपेण सा देवि मम पापं व्यपोहतु ।। ॐ सवत्सगव्यै नमः आचमनं समर्पयामि । **स्नानम्-** गंगादिसर्वतीर्थेभ्य आनीतं तोयमुत्तमम् । स्नानार्थं च मया दत्तं कृपया प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः स्नानं समर्पयामि । **आचमनम्-** विष्णोर्वक्षसि या देवी स्वाहा या च विभावसोः । चन्द्रार्कशक्रशक्तिर्या सा धेनुर्वरदाऽस्तु मे ।। ॐ सवत्सगव्यै नमः स्नानांगमाचमनं समर्पयामि । **वस्त्रम्-** आच्छादनं मया दत्तं सम्यक् शुद्धं सुनिर्मलम् । सुरभिर्वस्त्रदानेन प्रीयतां परमेश्वरि ।। ॐ सवत्सगव्यै नमः वस्त्रं समर्पयामि । ॐ सवत्सगव्यै नमः वस्त्रांगमाचमनं समर्पयामि । **चन्दनम्-** सर्वदेवप्रियं देवि चन्दनं चन्द्रसन्निभम् । कस्तूरीकुंकुमाढ्यं च गौर्गन्धं प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः गन्धं समर्पयामि । **अक्षताः-** नमो वो विश्वमूर्त्तिभ्यो विश्वमातृभ्य एव च । लोकाधिवासिनीभ्यश्च रोहिणीभ्यो नमो नमः ।। ॐ सवत्सगव्यै नमः अक्षतान् समर्पयामि । **पुष्पं पुष्पमाल्यं च-** माल्यादीनि सुगन्धीनि मालत्यादीनि मातृके । मयानीतानि पूजार्थं

पुष्पाणि प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः पुष्पं पुष्पमाल्यं च समर्पयामि । **धूपः**– आनन्दकृत्सर्वलोके देवानां च सदा प्रिये । गौस्त्वं पाहि जगन्नाथे धूपोऽयं प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः धूपमाघ्रापयामि । **दीपः**– साज्यवर्त्तिसमायुक्तमग्निना योजितं मया । दीपं गृहाण देवेशि त्रैलोक्यतिमिरापह ।। ॐ सवत्सगव्यै नमः दीपं दर्शयामि । हस्तौ प्रक्षाल्य नैवेद्यं दद्यात् । **नैवेद्यम्**– सुरभिस्त्वं जगन्माता नित्यं विष्णुपदे स्थिता । गोग्रासोऽयं मया दत्तो नैवेद्यं प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः नैवेद्यं निवेदयामि । ॐ सवत्सगव्यै नमः पानार्थं जलं समर्पयामि । **ताम्बूलम्**– एलादिचूर्णसंयुक्तं ताम्बूलं सुरपूजितम् । प्रीत्यर्थं च मया दत्तं सुरभे प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः ताम्बूलं समर्पयामि । **दक्षिणाद्रव्यम्**- हिरण्यगर्भगर्भस्थं हेमबीजं विभावसोः । अनन्तपुण्यफलदमतः शान्तिं प्रयच्छ मे ।। ॐ सवत्सगव्यै नमः दक्षिणाद्रव्यं समर्पयामि । **नीराजनम्**– चन्द्रादित्यौ च धरणी विद्युदग्निस्तथैव च । त्वमेव सर्वज्योतींषि आर्त्तिक्यं प्रतिगृह्यताम् ।। ॐ सवत्सगव्यै नमः नीराजनं समर्पयामि । **पुष्पांजलिः**– नानासुगन्धिपुष्पाणि यथाकालोद्भवानि च । पुष्पांजलिर्मया दत्तो गृहाण जगदीश्वरि ।। ॐ सवत्सगव्यै नमः पुष्पांजलिं समर्पयामि । **प्रदक्षिणा**– गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।। ॐ सवत्सगव्यै नमः प्रदक्षिणां समर्पयामि । **नमस्कारः**– नमो गोभ्यः श्रीमतीभ्यः सौरभेयीभ्य एव च । नमो ब्रह्मसुताभ्यश्च पवित्राभ्यो नमो नमः ।। मातः पयस्विनि पुनः पुनरेव नत्वा याचे तवांघ्रिविनतिं शरणं भवत्याः । दिव्यातिगोप्यचरितं भणितं श्रुतौ यत् सर्वं त्वदीयममलं हृदि मे तनोतु ।। ॐ सवत्सगव्यै नमः नमस्कारं निवेदयामि । **अर्पणम्**– अनेन यथाशक्तिकृतेन पूजनकर्मणा श्रीसुरभिः प्रीयतां न मम ।

इति संक्षिप्तं सवत्सगोपूजनम् ।

## अतिसंक्षिप्तगोपूजनम्

पूजनकर्त्ता कृतनित्यक्रियः सर्वपूजनसाधारणीं व्यवस्थां सम्पाद्य संकल्पपूर्वकं यथोपचारैः सवत्सां गां पूजयेत् ।

**संकल्पः**- अद्येत्यादि देशकालौ संकीर्त्य अमुकोऽहं सवत्सगोपूजनं करिष्ये ।

**ध्यानम्**- यया सर्वमिदं व्याप्तं जगत्स्थावरजंगमम् । तां धेनुं शिरसा वन्दे भूतभव्यस्य मातरम् ।। ॐ सवत्सगव्यै नमः ध्यानं समर्पयामि । **आवाहनम्**- ॐ सवत्सगव्यै नमः आवाहनं समर्पयामि । **आसनम्**- ॐ सवत्सगव्यै नमः आसनं समर्पयामि । **जलम्**- ॐ सवत्सगव्यै नमः पाद्यार्घाचमनीयस्नानीयपुनराचमनीयानि समर्पयामि । **चन्दनम्**- ॐ सवत्सगव्यै नमः इदमनुलेपनं समर्पयामि । **अक्षताः**- ॐ सवत्सगव्यै नमः अक्षतान् समर्पयामि । **पुष्पम्**- ॐ सवत्सगव्यै नमः पुष्पं पुष्पमाल्यं च समर्पयामि । **धूपः**- ॐ सवत्सगव्यै नमः धूपमाघ्रापयामि । **दीपः**- ॐ सवत्सगव्यै नमः दीपं दर्शयामि । **नैवेद्यम्**- ॐ सवत्सगव्यै नमः

नैवेद्यं निवेदयामि । **आचमनम्- ॐ सवत्सगव्यै नमः** आचमनीयं समर्पयामि । **दक्षिणाद्रव्यम्- ॐ सवत्सगव्यै नमः** दक्षिणाद्रव्यं समर्पयामि । **पुष्पांजलिः- ॐ सवत्सगव्यै नमः** पुष्पांजलिं समर्पयामि । **प्रदक्षिणा- ॐ सवत्सगव्यै नमः** प्रदक्षिणां समर्पयामि । **नमस्कारः- गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः । गावो मे हृदये सन्तु गवां मध्ये वसाम्यहम् ।। ॐ सवत्सगव्यै नमः नमस्कारं निवेदयामि** । इससे भी कम समय में पूजन के लिये गन्ध, पुष्प, धूप, दीप और नैवेद्य से पंचोपचार पूजन कर ले ।

**अनेन यथालब्धोपचारपूजनेन गोमाता प्रीयतां न मम ।**

# गोसहस्रनामस्तोत्रम्

## संकल्पः

**ॐ अद्य अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) सपत्नीकोऽहं गोभक्तिप्राप्तिपूर्वकं निखिलगोवंशस्य संरक्षण-संवर्द्धनद्वारा स्वसकलपरिवारकुटुम्बस्य सर्वविधकल्याणार्थं अमुकद्रव्येण गोसहस्रनामस्तोत्रेण गोरभिषेकं करिष्ये** । ततो गणपतिं ध्यात्वा न्यासविनियोगध्यानपूर्वकं गोऽभिषेकं कुर्यात् ।

## हृदयादिन्यासः

ॐ गाँ हृदयाय नमः । ॐ गीं शिरसे स्वाहा । ॐ गूँ शिखायै वषट् ।
ॐ गैं कवचाय हुम् । ॐ गौं नेत्राभ्यां वौषट् । ॐ गँः अस्त्राय फट् ।

## करन्यासः

ॐ गाँ अंगुष्ठाभ्यां नमः । ॐ गीं तर्जनीभ्यां नमः । ॐ गूँ मध्यमाभ्यां नमः ।
ॐ गैं अनामिकाभ्यां नमः । ॐ गौं कनिष्ठिकाभ्यां नमः । ॐ गँः करतलकरपृष्ठाभ्यां नमः ।

## विनियोगः

अस्य श्रीगोसहस्रनामस्तोत्रस्य राघवऋषिरनुष्टुप्छन्दः गौर्देवता गोवंशसंवर्द्धनार्थे गोरभिषेके विनियोगः ।

**सीतारामकृपासुधाश्रिततनुं वात्सल्यमन्दाकिनीं**
**देवीं देवशरीरिणीं भगवतीं सम्पूजितां दैवतैः ।**
**हुंकारार्दितपापतापनिवहां गोपालसम्पालितां**
**गोविन्दार्चितपंकजांघ्रिमनघां ध्यायामि गोमातरम् ।।**

गौर्गोविन्दी गवेन्द्रार्या गवीशा गोपगोपिता । गोजा गोदा गविप्राथ्यां गवेड्या गोपतिप्रिया ।।१।। गोपा गोपालिका गोपी गोपीथा गोपदार्कगुः । गोमयी गोमती गव्यदोग्ध्री गोमा गविस्तुता ।।२।। गोपहूता गोपवन्द्या गोपगीता गवार्चिता । गोविन्दपालिता गोष्ठा गोप्रिया गोमयामृता ।।३।। सर्वदेवमयी देवी दिव्यांघ्रिर्दिव्यभा द्युगुः । दिव्यरूपा दिव्यमाल्या दिव्यगंधा द्युधृग्द्युभुक् ।।४।। सर्वश्रेष्ठा सर्वतीर्था सर्वपूज्या समप्रिया । शमा शान्ता शुचिः स्निग्धा शुभ्रा सुभ्रूः स्वभूः स्वगुः ।।५।। कल्याणी कामदा काम्या कामगा कामधुक्कधुक् । कोष्णदुग्धा कुजा कावीकीर्तिता कीर्तिवर्धिनी ।।६।। माधवी माधवप्रेष्ठा मा मान्या माधवप्रिया । मानुता मानिता मेष्टा महिता महिमस्थिता ।।७।। बन्धुरा बन्धुदा बन्धुर्बान्धवी बन्धुगाऽवधूः । वन्दिता वाग्वृषवधूर्वन्दारुर्दारवी द्रुमा ।।८।। चारुरूपा चारुश्रृंगी चारुशोभा सुचारुगुः । चारुवत्सा चारुखुरा चारुगा चारुसुस्तनी ।।९।। चारुशीला चारुरुचिश्चारुभाषा चतुष्पदा । पवित्रा

पावनी पूता पूतात्मा पापनाशिनी ॥१०॥ शुभा शुभतरा सौम्या शोभिता शोभनस्पृहा । शुक्लवर्णा शुक्लरदा शुक्लत्विट्छुक्लरुपिणी ॥११॥ श्यामा श्यामप्रिया श्यामकर्णी श्यामपयोधरा । श्यामपुच्छी श्यामवर्णा श्यामांघ्रिः श्यामलोमिका ॥१२॥ श्यामात्मा श्यामभा श्यामदेहिका श्यामवत्सका । श्यामचित्ता श्यामसत्त्वा श्यामका श्याममूर्धजा ॥१३॥ कपिला कपिलस्तुत्या कपिलाक्षी सकापिली । कपिशा कपिशार्दूलपूज्या पूज्यपदाम्बुजा ॥१४॥ प्रणवा प्रणवाकारा प्रणवाभा प्रणेदुषी । प्रणवेड्या सत्प्रणवा प्रणवध्यानधारिणी ॥१५॥ प्राणा प्राणमयी प्राणपोषिणी प्राणधारिणी । प्राणभृत्प्राणकृत्प्राणधृत्प्राणत्विट्प्रणम्यधीः ॥१६॥ गव्यधुग्गव्यभुग्गव्यसूर्गव्यस्पृक्सगव्यभा । गव्यगा गव्यला गव्यदायिनी गव्यपायिनी ॥१७॥ हव्यदोहा हव्यतनुर्हव्यात्मा हव्यसूर्हविः । दोग्ध्री हव्यपया हव्यसर्पिर्हव्यदधिः स्वदा ॥१८॥ कव्यकृत्कव्यभृत्कव्यधारिणी कव्यहारिणी । कव्येष्टा कव्यघृतिका कव्यपूः कव्यवर्षिणी ॥१९॥ कामधेनुः कामगवी कामसूः कामकामिता । कामदा कामगा कामवर्षिणी कामकर्षिणी ॥२०॥ कामरूपा कामखुरा कामौजा कामनाशिनी । कामपूरा कामरुचिः कामतेजाः सुकामिनी ॥२१॥ कामश्वासा कामरवा कामा कामकरीषिणी । कामगन्धा कामवरा कामहा कामकुः शका ॥२२॥ कामहर्षा कामवर्षाऽकाम्या काम्यवरप्रदा । कामवृष्टिः कामसृष्टिः कामगृष्टिर्गरीयसी ॥२३॥ स्वर्गवी स्वर्णदीपूता स्वर्गनुत्स्वर्गसेविनी । स्वर्गध्येया स्वर्गज्ञेया स्वर्ग्या स्वर्गसुखाऽसुखा ॥२४॥ पूतक्रतुः पूतयज्ञा पूतहोमा विपूतिका । पूतात्मा पूतरविका पूतकृत्पूतवन्दिता ॥२५॥ स्वधाक्षीरा स्वधानीरा स्वधा हैयंगवा स्वधा । स्वधासर्पिः स्वधासृष्टिः स्वधादृष्टिः स्वधामदा ॥२६॥ स्वाहा स्वाहात्मिका स्वाहरेताः स्वाहाकरीषिणी । स्वाहादधिपयाः स्वाहाघृता  स्वाहापयस्विनी ॥२७॥ स्वाहाध्वनिमयी स्वाहासत्त्वा स्वाहैकविग्रहा । स्वाहाकारतनुः स्वाहातुष्टा स्वाहाप्रमोदिनी ॥२८॥ वषट्कारा चिदाकारा निराकारा शुभाकृतिः । स्निग्धाकाराऽभयाकरा प्रेमाकारा सदाकृतिः ॥२९॥ साध्वी साध्वीनुता साध्वीगीता साध्वीजनप्रिया । साध्वीष्टा साध्वीमहिता साध्वीसेव्या विसाध्वसा ॥३०॥ कृतिर्धृतिर्मतिः क्षान्तिः शान्तिर्दान्ती रतिर्गतिः । द्युतिर्नुतिः श्रुतिः कान्तिः श्रितिः कीर्तिः स्मृतिर्नतिः ॥३१॥ भामा वामा रमा रामा रम्या नम्याऽक्लमा क्षमा । डमा क्षामा समा श्यामा भीमा सीमा मनोरमा ॥३२॥ शिवा सेवा भवा भव्या नव्या गव्या रवा जवा । शोभा क्षोभा दवा दावा भावा ग्रावा लवा प्लवा ॥३३॥ धेनुर्धार्या धरा धाराऽपारावारा पराऽपरा । परावराऽधराऽधृष्याऽस्पृश्याऽक्लेश्या कृषिप्रिया ॥३४॥ रुट्रुष्टिस्त्विट्त्विषा तुष्टिः पुष्टिः पोषा सुपोषणा । तोषणा तोषिता तूर्णा तूर्णगा तूस्तुरंगमा ॥३५॥ तृट्तृष्णा तृड्ढरी तीक्ष्णा मृन्मृत्स्ना मृत्स्नयाश्रिता । मृदाऽमृता मृत्सदना मृद्धाम्नी मृन्मयी मृदुः ॥३६॥ मूर्च्छाहृन्मंगलाऽमूर्च्छाऽमूर्तिः पूर्तिः स्नुतिः स्मितिः। हृतिर्हेतिहृर्नुतिः पूतिः प्रीतिः प्राप्तिः सृतिः क्षितिः ॥३७॥ बला बलवती बल्या बलीवर्दप्रसूतिका । बलिप्रिया बलिभुजा बलितेजा बलिस्तनी ॥३८॥ बलानुजनुता नाम्या नम्रा नम्रप्रतोषिणी । नम्रस्तनी नम्रगतिर्नम्रश्रृंगी सनम्रका ॥३९॥ कम्रकान्तिः कम्रमहा कम्रा कम्रशिरोरुहा । कम्रस्वरा कम्रगात्री कम्रमूर्धा सुकम्रदृक् ॥४०॥ कान्ता कान्तालका कन्तुः कन्ता कन्धिः सुकामदा । काक्षी कंजाम्बिका कंजा कंजनाभिः कका कुका ॥४१॥ भूमिपा भूमिजापूज्या भूमिष्ठा भूमिपावनी । भूमिपेष्टा भूमिमयी भूमिमृद्भूमिभाविनी ॥४२॥ भूमा भूमनता भौमी भौमभा भौमदोषहा । भूमिभारहरी भूमिपापहृद्भूमिभूषणा ॥४३॥ भतिर्भूतजनिर्भाव्या विभूतिर्भूतभावनी । भूतात्मा भूतजननी भूतसौख्या विभूतिदा ॥४४॥ मंगल्या मंगलमुखी मांगली मंजुमंगला । मंगलेहा मांगलिकी मंगलात्मा सुमंगला ॥४५॥ मंजुर्मंजुतनुर्बभ्रूर्मंज्वीहा मंजुलस्तनी । मंजुदुग्धा मंजुदधिर्मंजुसर्पिः सुमंजुला ॥४६॥ मधुर्मधुमयी माध्वी माध्वीका मधुदोहिनी । मधुसूर्मधुदा मध्वजननी मधुहृत्प्रिया ॥४७॥ मधुरा मधुरालापा माधुरी मधुरामयी । मधुराभा सुमधुरा मधुरश्रुर्मधुव्रता ॥४८॥ मन्मथध्नी मदकरी मदनद्विण्मदालसा । माद्यन्ती मद्यशमनी मदनेशपतिस्तुता ॥४९॥ हरित्प्रिया हरिज्जग्धी हरिकान्तिर्हरिप्रदा । हरिषेणा हरिमती हरिहासा हरिस्पृहा ॥५०॥ हर्षिता हरिता हृष्टा

हरिलोमा हरिन्मयी । हरिनाथा हरिमुखी हरिश्रद्धा हरिस्तनी ॥५१॥ शुभ्रकान्तिः शुभ्रतनुः शुभ्राभा शुभ्रवत्सका । शुभ्रज्योत्स्ना शुभ्ररतिः शुभ्रेक्षा शुभ्रसंग्रहा ॥५२॥ दया कृपा कृषिः कृष्टिर्वृष्टिर्दृष्टिः कथाऽश्लथा । अव्यथा करुणा क्रान्तिः शान्तिदा शान्तिविग्रहा ॥५३॥ उत्सुका सोत्सवोत्कण्ठा वत्सला वत्सपालिका । लालिका ललना लाल्या लालिता ललिता हिता ॥५४॥ लक्षणा लक्षिता लक्ष्या लभ्या लाभा सुलम्भना । लब्धव्या लम्भनीयार्या लब्धा सल्लाभभाविता ॥५५॥ भामिता भामगाऽभामा भाम्या भामवती सती । शाश्वती साधुगा साध्या साधिकाऽसाध्वसाऽसमा ॥५६॥ साधना साधिता साधुः शुद्धा शुद्धपयाः स्पृहाः । स्पृहार्हा स्पृहविः स्पृह्या स्पृश्या स्पर्शा शुभस्पृशिः ॥५७॥ वरा वरेण्या वरदा वरार्हा वरवर्णिनी । वर्णना वर्णिता वर्या वरारोहा वरप्रदा ॥५८॥ शान्ता शान्तिप्रियाऽशान्तिः शान्तरोषा शमप्रिया । शमप्रदाऽशमा शाम्या शमशीला शमात्मिका ॥५९॥ क्षामाऽक्षमा क्षमिः क्षाम्याऽक्षान्तिः क्षान्ता क्षमामयी । क्षमावती क्षमिश्रेष्ठा क्षमाभूषा क्षमानिधिः ॥६०॥ धिष्ण्या धृष्याऽधृतिर्धृष्टा धृतक्षीरा धृताभया । धृतभामा धृतघृता धृतगव्या धृतस्तनी ॥६१॥ मधूर्मधुमती माध्वी मधुदा मधुगाऽमदा । मधुवर्चा मुधमहा मधुसर्पिर्मधुत्वचा ॥६२॥ माना मानधनाऽमान्या मानिनी मानदाऽमधुः । मन्दगा मन्दमा मन्दा मन्दरावा सुमध्यमा ॥६३॥ कोमला कोमलप्राप्या कोमलांगी सुकोमला । कोमलांगा कोमलिका कोमलौजाः सुकोमला ॥६४॥ कुमुत्कुमुद्वती काव्या कव्या हव्या हरिस्तुता । हरीष्टा हरिनम्यांघ्रिर्हरिवन्द्या हरिप्रिया ॥६५॥ हरिदा हरिमा हर्षा हर्षिणी हर्षदा हरिः । हरिभा हरिणी हृद्या हरीशा हरिघासभाक् ॥६६॥ विधिर्विधात्री विधिदा विधिवश्या विधिप्रिया । विधिवन्द्या विधिनुता विधिपूज्या विधायिनी ॥६७॥ विधिहा विधिमा वैधी विधिदृष्टा विधिस्तनी । विधिधूलिर्विधिखुरा विधिनम्या विधिस्नुता ॥६८॥ निर्मला विमलप्रज्ञा विशदा विशदस्नुता । विसदा विषदा विज्ञा विषघ्नी विषनाशिनी ॥६९॥ विषमा विषमाकारा वैषमी विषमात्मिका । विषमाभा विषमिणी विषमेष्टा विशोधिनी ॥७०॥ विद्या वेद्या वेदमयी वेदिता वेदना विदिः । वेदगा वेददा वेदी वित्ता वित्तप्रिया विदा ॥७१॥ बहुदुग्धा बहुदधिर्बहुसर्पिर्बहुश्रुतिः । बहुगोमयिका बह्वी वह्वेष्टा बहुदोहिनी ॥७२॥ बह्वाशा बहुनुता बहुला बहुवन्दिता । बहुप्रार्थ्या बहुजना बहुलोकनमस्कृता ॥७३॥ भयघ्नी भयहाऽभीतिर्भयदा भयभंजिनी । भयनाशा भयहरी भयकृद्भयवर्धिनी ॥७४॥ अभयाऽभयसंस्कारा अभयाभाऽभयात्मिका । अभयेष्टाऽभयकरी अभयेड्याऽभयश्रुतिः ॥७५॥ अश्रिता अमृतस्यन्दा अमृतास्याऽमृतश्रवाः । अमृतेशाऽमृतपया अमृतात्माऽमृतप्रदा ॥७६॥ अमृतस्राविनी देवी दैवी देवात्मिका रुचिः । द्योर्दिव्या दिव्यचरिता दिव्यात्मा दिव्यविग्रहा ॥७७॥ देवाभा देवमहिता देवात्मा देवपूजिता । देवेष्टा देवविनता देवेड्या देववल्लभा ॥७८॥ शस्या शस्यप्रदा शस्यशालिनी शस्यमालिनी । शस्यप्रिया शस्यदोहा शस्यसर्पिः सुशस्यिका ॥७९॥ सिद्धा सिद्धप्रिया सिद्धिः सिद्धिस्था सिद्धिदायिनी । सिद्धश्लोका सिद्धनता सिद्धिमाता सुसिद्धिदा ॥८०॥ सभ्या साध्यगणस्तुत्या साध्यसेव्या यशस्विनी । यशोधरा यशोमयी यशोराशिर्यशोधना ॥८१॥ यशःप्रिया यशःपूता यशोदुग्धा यशोघृता । यशोदधिर्यशस्स्यन्दा यशोगोमयिनी निधिः ॥८२॥ यतुशीला यतुमयी यातुधानविनाशिनी । यतुचित्ता यतुमतिर्यत्वात्मा यतुबुद्धिभाक् ॥८३॥ बद्धा बद्धजनप्रार्थ्या बद्धपादाऽवधप्रदा । बद्धरज्जुर्बद्धतनुः बद्धांघ्रिर्बद्धमोक्षिणी ॥८४॥ बन्धना बन्धनश्लाघ्या बन्धहा बन्धमोचिनी । बन्धमोक्षा बन्धधना विश्वा बिस्वा विशेषिणी ॥८५॥ आदित्यभगिनी रुद्रमाता वसुसुताऽसुता । अमृतप्रसूरमृतक्षीरिण्यमृतिनी सुगा ॥८६॥ विश्वमाता विश्वदेवी विश्वदेवा विरोचना । विश्वतीर्था विश्वगन्धा विश्वमाया विभुप्रिया ॥८७॥ विष्णुपूज्या विष्णुतनुर्वैष्णवी विष्णुभाविनी । विष्णुमाता विष्णुमयी विष्णुदा विष्णुवल्लभा ॥८८॥ ब्रह्मपूता ब्रह्ममयी ब्रह्मभूर्ब्रह्मदायिनी । ब्रह्मभूता ब्रह्मतनुब्रह्मज्ञा ब्रह्मवल्लिका ॥८९॥ महामाता महामाया महाभूतिर्महातनुः । महामात्या महादेवी महालक्ष्मीर्महामहा ॥९०॥ महाखुरा महापादा महोरस्का महोदरी । महास्कन्धा महाश्रृंगी महानासा

महामतिः ॥९१॥ महाचित्ता महाकारा महावक्रा महाहनुः । महानादा महाह्लादा महापुच्छा महापयाः ॥९२॥ महामना महाबुद्धिर्महाशक्तिर्महेश्वरी । महेशानी महावाणी महावत्सा महाफला ॥९३॥ चपला चपलाकारा चापली चापलप्रिया । चटुला चटुलश्लाघ्या चटुस्तुत्या चटुस्मृतिः ॥९४॥ गान्धर्वी गोपिकापूज्या गोपिनी गोपलालिता । गोप्रिया गोपतिप्रार्थ्या गोपाली गोपपालिता ॥९५॥ क्रोधना क्रोधसंहारा कोपना कोपनाशिनी । रौद्रा रुद्रकृताभ्यर्चा चण्डी चण्डीकृतस्तवा ॥९६॥ ह्रीः श्रीर्धीर्भूर्दुराधर्षा दुर्विभाव्या दुरासदा । दुर्धरा दुःस्थिता दुर्गा दुर्धर्षा र्दुगमण्डिनी ॥९७॥ माता मातृष्वसा मेध्या मातामह्युर्विक्रमा । मनोरमाशाऽमहिमा स्रग्विण्यमृतमेहिनी ॥९८॥ ऋद्धिर्वृद्धिर्निधा सम्पत्प्रपत्तिः तरुणी त्रपा । लज्जा श्रद्धा सुजिज्ञासा मुमुक्षा विजया जया ॥९९॥ विमलोत्कर्षिणी ज्ञाना योगा सत्या क्रियाऽमृषा । ईशानाऽनुग्रहाऽमोघा निग्रहा स्वार्थवर्जिता ॥१००॥ प्रसन्ना प्रसृता प्राप्या प्रांशुः प्राप्तिः प्रसादिनी । सत्प्रतिष्ठा सुप्रतीतिः प्रापिका परमेश्वरी ॥१०१॥ निष्प्रपंचा पंचभूता पंचगव्या प्रपंचकृत् । वात्सल्यमूर्तिः सत्पूर्तिर्जूर्तिर्हृत्कीर्तिदायिनी ॥१०२॥ वत्सदा प्रोज्ज्वला जाप्या तापहृत्पापकर्षिणी । वैतरणीसुनौर्नाव्या नता नरकनाशिनी ॥१०३॥ एकला सत्कलारूपा यज्ञयूपस्वरुपिणी । यज्ञप्रिया यज्ञधेनुर्यज्ञिया यज्ञवर्धिनी ॥१०४॥ नूतनी प्राक्तनी वृद्धा वर्धिता वर्धितप्रभा । पुराणी वैदिकी भक्तिः शक्तिः शक्याप्तसाधना ॥१०५॥ त्रयी त्रिदेवी त्रैवेदी त्रैविद्या त्रिजगन्मयी । जगन्नाथनुता नूत्ना नाकपाली सनातनी ॥१०६॥ रामचन्द्रार्चिता सीतापूजिता ब्रह्मवादिनी । भवाब्धिपोतसत्पुच्छा सर्वमंगलविग्रहा ॥१०७॥ पृथ्वी पृथुलपयोदा पुण्या विधिहरिहरार्चिताब्जांघ्रिः । त्रिजगज्जननी जैत्रा गोमाता सन्ततं जयति ॥१०८॥ अनेन कृतेन गोसहस्रनामस्तोत्रेण अभिषेककर्मणा भगवती सुरभिः प्रीयतां, न मम ।

इति श्रीरामभद्राचार्यविरचितं गोसहस्रनामस्तोत्रम् ।

# श्रीसुरभ्यष्टोत्तरसहस्रनाममालिका

## सङ्कल्पः

ॐ अद्य अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) सपत्नीकोऽहं गोभक्तिप्राप्तिपूर्वकं निखिलगोवंशस्य संरक्षण-संवर्द्धनद्वारा स्वस्य सकलपरिवारकुटुम्बस्य च सर्वविधकल्याणार्थं अमुकद्रव्येण श्रीसुरभ्यष्टोत्तरसहस्रनामभिः श्रीसुरभ्यर्चनं करिष्ये ।

ततो गणपतिं ध्यात्वा न्यासविनियोगध्यानपूर्वकं श्रीसुरभ्यर्चनं कुर्यात् ।

## हृदयादिन्यासः

ॐ सुँ हृदयाय नमः। ॐ रँ शिरसे स्वाहा। ॐ भ्यैं शिखायै वषट्।
ॐ नँ कवचाय हुम्। ॐ मँः नेत्राभ्यां वौषट्। ॐ सुरभ्यै नमः अस्त्राय फट्।

## करन्यासः

ॐ सुँ अंगुष्ठाभ्यां नमः। ॐ रँ तर्जनीभ्यां नमः। ॐ भ्यैं मध्यमाभ्यां नमः।
ॐ नँ अनामिकाभ्यां नमः। ॐ मँः कनिष्ठिकाभ्यां नमः।
ॐ सुरभ्यै नमः करतलकरपृष्ठाभ्यां नमः।

## विनियोगः

अस्याः श्रीसुरभ्यष्टोत्तरसहस्रनाममालिकायाः शिवऋषिरनुष्टुप्छन्दः

सुरभिर्देवता गोवंशसंवर्द्धनपूर्वकं मम सर्वाभीष्टसिद्ध्यर्थे सुरभ्यर्चने विनियोगः।

## ध्यानम्

याऽऽराध्या विधिविष्णुरुद्रमुनिभिर्या विश्ववन्द्यार्चिता
सर्वप्राणिहितैषिणी शुभकरी त्रैलोक्यमाता च या ।
नित्यानन्दमयी पराऽध्वरहविर्मूला जगत्तारिणी
सा धेनुर्वरदाऽस्तु मे भगवती सर्वेश्वरस्येश्वरी ॥

ॐ सुरभ्यै नमः । ॐ गोमात्रे नमः । ॐ अकुतोभयायै नमः । ॐ अक्षतायै नमः। ॐ अक्षयायै नमः । ॐ अक्षरायै नमः। ॐ अखण्डायै नमः । ॐ अखिलायै नमः । ॐ अगस्त्यसेवितायै नमः । ॐ अगाधायै नमः ॥१०॥ ॐ अग्निकुण्डजायै नमः । ॐ अग्निशिखायै नमः । ॐ अग्रियायै नमः । ॐ अघहरायै नमः । ॐ अघ्न्यायै नमः । ॐ अचण्ड्यै नमः । ॐ अचलायै नमः । ॐ अचिन्त्यायै नमः । ॐ अचिन्त्यशक्त्यै नमः । ॐ अच्युतायै नमः ॥२०॥ ॐ अच्छायै नमः । ॐ अजस्रायै नमः । ॐ अजायै नमः । ॐ अजितायै नमः । ॐ अजिह्मायै नमः । ॐ अटवीव्रज्यायै नमः । ॐ अतिथ्यै नमः । ॐ अतिनिर्हारिण्यै नमः । ॐ अतिशक्तितायै नमः । ॐ अतिशोभनायै नमः ॥३०॥ ॐ अतीन्द्रियायै नमः । ॐ अदित्यै नमः । ॐ अदृष्टस्वरूपायै नमः । ॐ अद्भुतायै नमः । ॐ अद्रिविहारिण्यै नमः । ॐ अद्वयशक्त्यै नमः । ॐ अधिकायै नमः । ॐ अधीश्वर्यै नमः । ॐ अध्यक्षायै नमः । ॐ अध्यात्मविद्याप्रदायै नमः ॥४०॥ ॐ अध्वरमूलायै नमः । ॐ अध्वर्युपूज्यायै नमः । ॐ अनघायै नमः । ॐ अनडुह्प्रसूत्यै नमः । ॐ अनन्तायै नमः । ॐ अनन्तार्चितायै नमः । ॐ अनन्तफलदायै नमः । ॐ अनन्तशक्तिसम्पन्नायै नमः । ॐ अनवस्करायै नमः । ॐ अनागतार्तवायै नमः ॥५०॥ ॐ अनाहतायै नमः । ॐ अनन्तार्चितायै नमः । ॐ अनिरुद्धायै नमः । ॐ अनुकम्पायै नमः । ॐ अनुक्रोशायै नमः । ॐ अनादिपूज्यायै नमः । ॐ अनुग्रहकर्यै नमः । ॐ अनुत्तमायै नमः । ॐ अनुत्तरायै नमः । ॐ अखिलेश्वर्यै नमः ॥६०॥ ॐ

अनुपमायै नमः । ॐ अनुमत्यै नमः । ॐ अनूपायै नमः । ॐ अन्तर्वत्न्यै नमः । ॐ अन्तर्वाण्यै नमः । ॐ अन्नदायै नमः । ॐ अन्नरूपायै नमः । ॐ अपराजितायै नमः । ॐ अपर्णायै नमः । ॐ अपावृतायै नमः ।।७०।। ॐ अबाधायै नमः । ॐ अभयायै नमः । ॐ अभिख्यायै नमः । ॐ अभिज्ञायै नमः । ॐ अभिधायै नमः । ॐ अभिनीतायै नमः । ॐ अभिव्याप्त्यै नमः । ॐ अभीष्टायै नमः । ॐ अभ्युदयायै नमः । ॐ अभ्युपपत्त्यै नमः ।।८०।। ॐ अमरावत्यै नमः । ॐ अमर्त्यायै नमः । ॐ अमर्षायै नमः । ॐ अमलायै नमः । ॐ अमृतायै नमः । ॐ अमृतनाभ्यै नमः । ॐ अमृतवर्षिण्यै नमः । ॐ अमृषायै नमः । ॐ अमानिन्यै नमः । ॐ अमोघायै नमः ।।९०।। ॐ अम्बायै नमः । ॐ अम्बिकायै नमः । ॐ अम्बालिकायै नमः । ॐ अर्चायै नमः । ॐ अर्चितायै नमः । ॐ अर्जुन्यै नमः । ॐ अर्घ्यायै नमः । ॐ अर्बुदारण्यवासिन्यै नमः । ॐ अर्हणायै नमः । ॐ अर्हितायै नमः ।।१००।। ॐ अलंक्रियायै नमः । ॐ अलंकृतायै नमः । ॐ अवतोकायै नमः । ॐ अवधेशार्चितायै नमः । ॐ अविद्यायै नमः । ॐ अव्यथायै नमः । ॐ अर्शितायै नमः । ॐ अशेषायै नमः । ॐ अशोकायै नमः । ॐ अश्रान्तायै नमः ।।११०।। ॐ असितार्चितायै नमः । ॐ आदित्यभगिन्यै नमः । ॐ आकीर्णायै नमः । ॐ आग्नाय्यै नमः । ॐ आद्यायै नमः । ॐ आनन्ददायै नमः । ॐ आप्तायै नमः । ॐ आप्तसेवितायै नमः । ॐ आभीरसेवितायै नमः । ॐ आयुर्दायै नमः ।।१२०।। ॐ आरक्तपिङ्गाक्ष्यै नमः । ॐ आर्यायै नमः । ॐ आर्यावर्त्ताधिष्ठात्र्यै नमः । ॐ आल्यै नमः । ॐ आशायै नमः । ॐ आशिर्दायै नमः । ॐ आश्चर्यायै नमः। ॐ आश्रयायै नमः । ॐ आसनायै नमः । ॐ इच्छावत्यै नमः ।।१३०।। ॐ इज्यायै नमः । ॐ इडायै नमः । ॐ इन्दिरायै नमः । ॐ ईप्सितफलदायै नमः । ॐ इरावत्यै नमः । ॐ इष्ट्यै नमः । ॐ ईडितायै नमः । ॐ ईक्षणिकायै नमः । ॐ ईशायै नमः । ॐ ईश्वर्यै नमः ।।१४०।। ॐ ईहायै नमः । ॐ उज्ज्वलायै नमः । ॐ उत्कृष्टायै नमः । ॐ उत्कर्षायै नमः । ॐ उत्कलिकायै नमः । ॐ उत्सुकायै नमः । ॐ उत्तमायै नमः । ॐ उत्तमाङ्गायै नमः । ॐ उत्थितायै नमः । ॐ उत्पलावर्त्तवनवासिन्यै नमः ।।१५०।। ॐ उत्फुल्लायै नमः । ॐ उत्सुकायै नमः । ॐ उदक्यायै नमः । ॐ उदग्रायै नमः । ॐ उदारायै नमः । ॐ उद्गातृपूज्यायै नमः । ॐ उद्यतायै नमः । ॐ उन्नतायै नमः । ॐ उपकारिकायै नमः । ॐ उपकार्यायै नमः ।।१६०।। ॐ उपचितायै नमः । ॐ उपज्ञायै नमः । ॐ उपनिषद्रूपायै नमः । ॐ उपसर्यायै नमः । ॐ उपासनायै नमः । ॐ उमायै नमः । ॐ उर्वरायै नमः । ॐ उर्व्यै नमः । ॐ उस्रायै नमः। ॐ ऊधोवत्यै नमः ।।१७०।। ॐ ऊर्जस्वलायै नमः । ॐ ऊर्जस्विन्यै नमः । ॐ ऋक्थायै नमः । ॐ ऋग्रूपायै नमः । ॐ ऋतुमत्यै नमः । ॐ ऋत्विगर्च्यायै नमः । ॐ ऋद्ध्यै नमः । ॐ ऋषिपूज्यायै नमः । ॐ एकाब्दायै नमः । ॐ एनोघ्न्यै नमः ।।१८०।। ॐ ऐश्वर्यायै नमः । ॐ ओङ्काररूपिण्यै नमः । ॐ ओषधिवर्द्धिन्यै नमः । ॐ ककुद्मत्यै नमः । ॐ कपर्द्दिसेवितायै नमः । ॐ कपिलायै नमः । ॐ कपिलस्तुतायै नमः । ॐ कपिलाक्ष्यै नमः । ॐ कपीशपूज्यायै नमः । ॐ कमलायै नमः ।।१९०।। ॐ कम्बलवत्यै नमः । ॐ करीषिण्यै नमः । ॐ करुणायै नमः । ॐ करुणासारायै नमः । ॐ कर्मसाक्षिण्यै नमः । ॐ कलायै नमः । ॐ कलिङ्गार्चितायै नमः । ॐ कल्पवृक्षस्वरूपिण्यै नमः । ॐ कल्याण्यै नमः । ॐ कवलदायै नमः ।।२००।। ॐ कव्यप्रदायै नमः । ॐ काङ्क्षायै नमः । ॐ काञ्चनवर्णायै नमः । ॐ कात्यायन्यै नमः । ॐ कान्तायै नमः । ॐ कान्त्यै नमः । ॐ कामप्रदायै नमः । ॐ कामरूपिण्यै नमः । ॐ कामवर्षिण्यै नमः । ॐ कामगामिन्यै नमः ।।२१०।। ॐ कारणायै नमः । ॐ कारुणिकायै नमः । ॐ कारुण्यायै नमः । ॐ कालिकायै नमः । ॐ कालिन्द्यै नमः । ॐ कालुष्यहीनायै नमः । ॐ काशीविलासिन्यै नमः । ॐ काश्यप्यै नमः । ॐ कांस्योपदोहिन्यै नमः । ॐ कीर्त्त्यै नमः ।।२२०।।

ॐ कुजदोषहरायै नमः । ॐ कुटुम्बिन्यै नमः । ॐ कुरुजाङ्गलवासिन्यै नमः । ॐ कृच्छ्रसम्पादिन्यै नमः । ॐ कृपामूर्त्यै नमः । ॐ कृशानुजायै नमः । ॐ कृषिमूलायै नमः । ॐ कृष्णपयोदायै नमः । ॐ कृष्णप्रियायै नमः । ॐ केल्यै नमः ॥२३०॥ ॐ केवलायै नमः । ॐ केशवार्चितायै नमः । ॐ कैवल्यायै नमः । ॐ कामधेन्वै नमः । ॐ कोमलायै नमः । ॐ क्रतुवर्द्धिन्यै नमः । ॐ क्रियायै नमः । ॐ क्रीडायै नमः । ॐ क्रोधनाशिन्यै नमः । ॐ क्लेशहारिण्यै नमः ॥२४०॥ ॐ क्षणदायै नमः । ॐ क्षणप्रभायै नमः । ॐ क्षमायै नमः । ॐ क्षेमायै नमः । ॐ क्षान्त्यै नमः । ॐ क्षित्यै नमः । ॐ क्षीरधेन्वै नमः । ॐ क्षीरायै नमः । ॐ क्षीरशुक्लायै नमः । ॐ क्षीरार्णवायै नमः ॥२५०॥ ॐ क्षीररत्नायै नमः । ॐ क्षीरसरोवरायै नमः । ॐ क्षीराब्धिजायै नमः । ॐ क्षीराव्यै नमः । ॐ क्षेत्रज्ञायै नमः । ॐ क्षोण्यै नमः । ॐ क्ष्मायै नमः । ॐ खुरवत्यै नमः । ॐ ख्यात्यै नमः । ॐ गङ्गागर्भायै नमः ॥२६०॥ ॐ गन्धार्चितायै नमः । ॐ गन्धिन्यै नमः । ॐ गभीरायै नमः । ॐ गरिष्ठायै नमः । ॐ गर्भिण्यै नमः । ॐ गलकम्बलवत्यै नमः । ॐ गलपिङ्गलायै नमः । ॐ गवीश्वर्यै नमः । ॐ गव्यदाननिरतायै नमः । ॐ गान्धर्व्यै नमः ॥२७०॥ ॐ गायत्र्यै नमः । ॐ गीर्वाणरूपायै नमः । ॐ गुग्गुलगन्धिकायै नमः । ॐ गुडधेन्वै नमः । ॐ गुर्विण्यै नमः।ॐ गुह्यविग्रहायै नमः । ॐ गूढायै नमः । ॐ गृष्ट्यै नमः । ॐ गृहागतायै नमः । ॐ गृहरक्षिकायै नमः ॥२८०॥ ॐ गवे नमः । ॐ गोकुलविहारिण्यै नमः । ॐ गोतमार्चितायै नमः । ॐ गोत्ररक्षिण्यै नमः । ॐ गोदायै नमः । ॐ गोपधनायै नमः । ॐ गोपस्तुतायै नमः । ॐ गोपालसेवितायै नमः । ॐ गोप्रियायै नमः । ॐ गोप्यै नमः ॥२९०॥ ॐ गोप्यर्चितायै नमः । ॐ गोपीप्रेमवर्द्धिन्यै नमः । ॐ गोमयप्रदायै नमः । ॐ गोरसदात्र्यै नमः । ॐ गोवर्द्धनविहारिण्यै नमः । ॐ गोविन्दार्चितायै नमः । ॐ गोष्ठवासिन्यै नमः । ॐ गोष्ठ्यै नमः । ॐ गौर्य्यै नमः । ॐ ग्रासाशिन्यै नमः ॥३००॥ ॐ गोलोकसम्राज्ञ्यै नमः । ॐ गौरपिङ्गलायै नमः । ॐ ग्रहमण्डलस्थायै नमः । ॐ घण्टाग्रैवेयायै नमः । ॐ घृतधेन्वै नमः । ॐ घृतनद्यै नमः । ॐ घृतयोन्यै नमः । ॐ घृतावर्त्तायै नमः । ॐ चञ्चलायै नमः । ॐ चण्डिकायै नमः ॥३१०॥ ॐ चतुर्हायण्यै नमः । ॐ चतुष्पदायै नमः । ॐ चपलायै नमः । ॐ चारुवत्सायै नमः । ॐ चारुवदनायै नमः । ॐ चारुवाण्यै नमः । ॐ चारुशीलायै नमः । ॐ चारुशोभायै नमः । ॐ चारुश्रृङ्ग्यै नमः । ॐ चार्वङ्ग्यै नमः ॥३२०॥ ॐ चिकित्सामूलायै नमः । ॐ चिच्छक्त्यै नमः । ॐ चित्रकूटविहारिण्यै नमः । ॐ चित्रायै नमः । ॐ चिदचिदात्मिकायै नमः । ॐ चिन्तामण्यै नमः । ॐ चिन्ताहरायै नमः । ॐ चिन्त्यायै नमः । ॐ चिरप्रसूतायै नमः । ॐ चुल्ल्याधारायै नमः ॥३४०॥ ॐ चुल्लिपूजितायै नमः । ॐ चेतनायै नमः । ॐ छन्दोगर्भायै नमः । ॐ छायायै नमः । ॐ जगत्तारिण्यै नमः । ॐ जगन्मात्रे नमः । ॐ जनतार्चितायै नमः । ॐ जनन्यै नमः । ॐ जमदग्निपूजितायै नमः।ॐ जम्बुवनवासिन्यै नमः ॥३५०॥ ॐ जयन्त्यै नमः।ॐ जयायै नमः । ॐ जलधेन्वै नमः । ॐ जातायै नमः । ॐ जानकीसख्यै नमः । ॐ जायमानायै नमः । ॐ जीविकायै नमः । ॐ ज्ञप्त्यै नमः । ॐ ज्योतीरूपायै नमः । ॐ ज्ञानदायै नमः ॥३६०॥ ॐ ज्योत्स्नायै नमः । ॐ ज्वरहरायै नमः । ॐ तत्त्वात्मिकायै नमः । ॐ तपोधनायै नमः । ॐ तमोघ्न्यै नमः । ॐ तरुण्यै नमः । ॐ तल्लजायै नमः । ॐ ताम्रपृष्ठायै नमः । ॐ तिलधेन्वै नमः । ॐ तीर्थार्चितायै नमः ॥३७०॥ ॐ तीर्थरूपायै नमः । ॐ तुष्टायै नमः । ॐ तेजस्विन्यै नमः । ॐ तृणाशिन्यै नमः । ॐ तृप्त्यै नमः । ॐ त्रिकालसेव्यायै नमः । ॐ त्रिदशार्चितायै नमः । ॐ त्रिहायण्यै नमः । ॐ त्रैविद्यायै नमः । ॐ त्रयम्बकरक्षितायै नमः ॥३८०॥ ॐ दक्षजायै नमः । ॐ दक्षिणायै नमः । ॐ दक्षिणावर्यायै नमः । ॐ दक्षिण्यायै नमः । ॐ दण्डकारण्यवासिन्यै नमः । ॐ दधिधेन्वै नमः । ॐ दयायै नमः । ॐ दयामय्यै नमः । ॐ

दयितायै नमः । ॐ दर्पघ्न्यै नमः ॥३९०॥ ॐ दानवघातिन्यै नमः । ॐ दामोदरपूजितायै नमः । ॐ दाम्पत्यरक्षिण्यै नमः । ॐ दासपालिकायै नमः । ॐ दिलीपसेवितायै नमः । ॐ दिव्यगन्धायै नमः । ॐ दिव्यचरितायै नमः । ॐ दिव्यदेहायै नमः । ॐ दिव्यपादायै नमः । ॐ दिव्यप्रभायै नमः ॥४००॥ ॐ दिव्यरूपायै नमः । ॐ दिव्यस्रग्ग्रीवायै नमः । ॐ दीप्त्यै नमः । ॐ दुग्धिकायै नमः । ॐ दुग्धार्णवायै नमः । ॐ दुर्गतिनाशिन्यै नमः । ॐ दुर्गारूपायै नमः । ॐ दुर्दिनहरायै नमः । ॐ दूर्वाशिन्यै नमः । ॐ दृष्टिकर्यै नमः ॥४१०॥ ॐ देवगर्भायै नमः । ॐ देवतायै नमः । ॐ देवार्चितायै नमः । ॐ देवस्तनायै नमः । ॐ देवेश्यै नमः । ॐ देव्यै नमः । ॐ दैत्यरक्षोदलिन्यै नमः । ॐ दोग्ध्र्यै नमः । ॐ दोहदवत्यै नमः । ॐ द्युरूपायै नमः ॥४२०॥ ॐ द्युत्यै नमः । ॐ द्रविणायै नमः । ॐ द्रविणप्रदायै नमः । ॐ द्रविडार्चितायै नमः । ॐ द्रोणक्षीरायै नमः । ॐ द्वास्थितायै नमः । ॐ द्वारक्षिकायै नमः । ॐ द्विजसारायै नमः । ॐ द्विहायन्यै नमः । ॐ धनदायै नमः ॥४३०॥ ॐ धन्यायै नमः । ॐ धरायै नमः । ॐ धर्मगर्भायै नमः । ॐ धर्मविग्रहायै नमः । ॐ धवलायै नमः । ॐ धात्र्यै नमः । ॐ धारणायै नमः । ॐ धिषणायै नमः । ॐ धीशक्त्यै नमः । ॐ धुर्यजनन्यै नमः ॥४४०॥ ॐ धृतक्षीरायै नमः । ॐ धृत्यै नमः । ॐ धेनुमत्यै नमः । ॐ धेन्वै नमः । ॐ नन्दग्रामविहारिण्यै नमः । ॐ नन्दायै नमः । ॐ नन्दिन्यै नमः । ॐ नमस्यायै नमः । ॐ नम्रगत्यै नमः । ॐ नम्रश्रृङ्ग्यै नमः ॥४५०॥ ॐ नरकनाशिन्यै नमः । ॐ नर्मदायै नमः । ॐ नलिनीदलपूजितायै नमः । ॐ नवनीतप्रदायै नमः । ॐ नवसूतिकायै नमः । ॐ नव्यायै नमः । ॐ नायिकायै नमः । ॐ नारायण्यै नमः । ॐ निःश्रेयसकर्यै नमः। ॐ निगमगर्भायै नमः ॥४६०॥ ॐ नित्यानन्दकर्यै नमः । ॐ नृपार्चितायै नमः । ॐ निपुणायै नमः । ॐ निमित्तोपादानकारणायै नमः । ॐ निर्भयायै नमः । ॐ निर्मलायै नमः । ॐ निलयशोभायै नमः । ॐ निष्ठायै नमः । ॐ निष्णातायै नमः । ॐ निष्पापायै नमः ॥४७०॥ ॐ निष्प्रपञ्चिन्यै नमः । ॐ निःस्वार्थायै नमः । ॐ नूपुरवत्यै नमः । ॐ नैचिक्यै नमः । ॐ नैमिषारण्यवासिन्यै नमः । ॐ पञ्चगव्यप्रसूत्यै नमः । ॐ पञ्चप्राणायै नमः । ॐ पद्मायै नमः । ॐ पद्मालयायै नमः । ॐ पद्मांशायै नमः ॥४८०॥ ॐ पयस्यायै नमः । ॐ पयस्विन्यै नमः । ॐ पयोधरायै नमः । ॐ परमायै नमः । ॐ परायै नमः । ॐ परित्रात्र्यै नमः । ॐ परेशायै नमः । ॐ परेष्टुकायै नमः । ॐ पलिक्न्यै नमः । ॐ पवित्रायै नमः ॥४९०॥ ॐ पश्यन्त्यै नमः । ॐ पापघ्न्यै नमः । ॐ पार्वतीप्रियायै नमः । ॐ पावन्यै नमः । ॐ पाटलायै नमः । ॐ पिङ्गलायै नमः । ॐ पितृगणेश्वर्यै नमः । ॐ पितृतारिण्यै नमः । ॐ पितृतोषिण्यै नमः । ॐ पीतवर्णायै नमः ॥५००॥ ॐ पीनोघ्न्यै नमः । ॐ पीवरस्तन्यै नमः । ॐ पीयूषिण्यै नमः । ॐ पुच्छिन्यै । ॐ पुच्छपिङ्गलायै नमः । ॐ पुण्डरीकाक्षसेवितायै नमः । ॐ पुण्यायै नमः । ॐ पुत्रदायै नमः । ॐ पुरस्सरायै नमः । ॐ पुराणस्तुतायै नमः ॥५१०॥ ॐ पुरातनायै नमः । ॐ पुष्करारण्यवासिन्यै नमः । ॐ पुष्कलायै नमः । ॐ पुष्टाङ्गायै नमः । ॐ पुष्ट्यै नमः । ॐ पुष्पार्चितायै नमः । ॐ पुष्पिण्यै नमः । ॐ पूजितायै नमः । ॐ पूज्यायै नमः । ॐ पूर्णकुम्भस्तन्यै नमः ॥५२०॥ ॐ पूर्णायै नमः । ॐ पृथिवीरूपधारिण्यै नमः । ॐ पृथुलायै नमः । ॐ पृषदाज्यनिलयायै नमः । ॐ प्रकटोदितायै नमः । ॐ प्रकाशिन्यै नमः । ॐ प्रकृत्यै नमः । ॐ प्रगल्भायै नमः । ॐ प्रजावत्यै नमः । ॐ प्रज्ञायै नमः ॥५३०॥ ॐ प्रणवात्मिकायै नमः । ॐ प्रतिमायै नमः । ॐ प्रतिष्ठायै नमः । ॐ प्रत्यक्षायै नमः । ॐ प्रत्यग्रायै नमः। ॐ प्रथितवीर्यायै नमः । ॐ प्रपञ्चाधिष्ठात्र्यै नमः । ॐ प्रभावत्यै नमः । ॐ प्रभूतक्षीरायै नमः । ॐ प्रमोदिन्यै नमः ॥५४०॥ ॐ प्रसन्नचित्तायै नमः । ॐ प्रसूतिगृहरक्षिकायै नमः । ॐ प्राचीनायै नमः । ॐ प्राज्ञायै नमः । ॐ प्राणशक्त्यै नमः । ॐ प्राणपोषिण्यै नमः । ॐ प्राणप्रियायै नमः । ॐ प्राणात्मिकायै

नमः । ॐ प्राणायै नमः । ॐ प्राप्त्यै नमः ॥५५०॥ ॐ प्रियायै नमः । ॐ प्रीत्यै नमः । ॐ प्रेक्षायै नमः । ॐ प्रेमाम्बुपूर्णायै नमः । ॐ फलवत्यै नमः । ॐ फलदायै नमः । ॐ बन्धमोचिन्यै नमः । ॐ बभ्रुवर्णायै नमः । ॐ बलभद्रार्चितायै नमः । ॐ बलीवर्दप्रदायै नमः ॥५६०॥ ॐ बल्यायै नमः । ॐ बष्कयण्यै नमः । ॐ बहुदुग्धवत्यै नमः । ॐ बहुदोहिन्यै नमः । ॐ बहुमूल्यायै नमः । ॐ बहुरूपायै नमः । ॐ बहुलायै नमः । ॐ बहुसूत्यै नमः । ॐ बान्धव्यै नमः । ॐ बालायै नमः ॥५७०॥ ॐ बालगर्भिण्यै नमः। ॐ बालदोषहरायै नमः । ॐ बीजात्मिकायै नमः । ॐ बुद्ध्यै नमः । ॐ ब्रह्मण्यायै नमः । ॐ ब्रह्ममहिष्यै नमः । ॐ ब्रह्मवादिन्यै नमः । ॐ ब्रह्मसुतायै नमः । ॐ ब्राह्मण्यै नमः । ॐ ब्राह्म्यै नमः ॥५८०॥ ॐ भक्तिस्वरूपायै नमः । ॐ भक्तिवर्द्धिन्यै नमः । ॐ भयघ्न्यै नमः । ॐ भद्रकुम्भस्तन्यै नमः । ॐ भद्रकर्यै नमः । ॐ भद्रायै नमः । ॐ भरद्वाजार्चितायै नमः । ॐ भवतापहन्त्र्यै नमः । ॐ भवान्यै नमः । ॐ भव्यायै नमः ॥५९०॥ ॐ भाग्यवर्द्धिन्यै नमः । ॐ भारत्यै नमः । ॐ भार्गवपूजितायै नमः । ॐ भावनायै नमः । ॐ भाव्यायै नमः । ॐ भीमार्चितायै नमः । ॐ भीष्माराधितायै नमः । ॐ भूतभव्यमात्रे नमः । ॐ भूत्यै नमः । ॐ भूम्यै नमः ॥६००॥ ॐ भूयस्यै नमः । ॐ भूयिष्ठायै नमः । ॐ भूरिक्षीरायै नमः । ॐ भूरिवन्दितायै नमः । ॐ भृत्यै नमः । ॐ भोगकर्यै नमः । ॐ भ्रान्त्यै नमः । ॐ भगवत्यै नमः । ॐ मखमन्त्रमूलायै नमः । ॐ मगधार्चितायै नमः ॥६१०॥ ॐ मङ्गलायै नमः । ॐ मङ्गलप्रदायै नमः । ॐ मङ्गल्यायै नमः । ॐ मञ्जुलायै नमः । ॐ मण्यै नमः । ॐ मण्डितायै नमः । ॐ मत्यै नमः । ॐ मतिप्रदायै नमः । ॐ मथुरावासिन्यै नमः । ॐ मधुगव्यायै नमः ॥६२०॥ ॐ मधुदोहिन्यै नमः । ॐ मधुरायै नमः । ॐ मधुश्रवायै नमः । ॐ मध्यमायै नमः । ॐ मध्यस्थायै नमः । ॐ मनोरमायै नमः । ॐ मनोहारिण्यै नमः । ॐ मनीषायै नमः । ॐ मन्त्रदायै नमः । ॐ मन्दगामिन्यै नमः ॥६३०॥ ॐ मन्दस्मितायै नमः । ॐ मरीचिपूजितायै नमः । ॐ मर्त्यार्चितायै नमः । ॐ मर्यादायै नमः । ॐ महत्यै नमः । ॐ महाशक्त्यै नमः । ॐ मखाधरायै नमः । ॐ मधुधेन्वै नमः । ॐ महाधनायै नमः । ॐ महाभागायै नमः ॥६४०॥ ॐ महाविद्यास्वरूपिण्यै नमः। ॐ महाङ्गायै नमः। ॐ महिम्न्यै नमः । ॐ मह्यै नमः। ॐ महोक्षजायै नमः। ॐ महेश्वर्यै नमः । ॐ माङ्गल्यदायै नमः । ॐ महोद्यमायै नमः । ॐ मात्रे नमः । ॐ माधव्यै नमः ॥६५०॥ ॐ माधवार्चितायै नमः । ॐ माध्व्यै नमः । ॐ मानदायै नमः । ॐ मानिन्यै नमः । ॐ मान्यायै नमः । ॐ मायायै नमः । ॐ माहेश्यै नमः । ॐ माहेश्वर्यै नमः । ॐ मुक्तादामविराजितायै नमः । ॐ मुक्त्यै नमः ॥६६०॥ ॐ मुक्तिदायै नमः । ॐ मुक्तालाङ्गूलायै नमः । ॐ मुख्यायै नमः । ॐ मुरारिसेवितायै नमः । ॐ मूलधनायै नमः । ॐ मूलप्रकृत्यै नमः । ॐ मृत्युञ्जयायै नमः । ॐ मृदुलायै नमः । ॐ मृदुस्वभावायै नमः । ॐ मेघनिर्घोषायै नमः ॥६७०॥ ॐ मेदिन्यै नमः । ॐ मेध्यायै नमः । ॐ मिथिलाभूविलासिन्यै नमः । ॐ मिथिलेशसमर्चितायै नमः । ॐ मीमांसाधर्मरक्षिकायै नमः । ॐ मैथिलीपतिसेवितायै नमः । ॐ मैथिल्यै नमः । ॐ मैथिलीप्रियायै नमः । ॐ यजमानधनायै नमः । ॐ यज्ञकारणायै नमः ॥६८०॥ ॐ यज्ञगर्भायै नमः । ॐ यज्ञधेन्वै नमः । ॐ यज्ञफलायै नमः । ॐ यज्ञयूपात्मिकायै नमः । ॐ यज्ञवर्द्धिन्यै नमः । ॐ यज्ञसाधनभूतायै नमः । ॐ यज्ञाधारायै नमः । ॐ यज्ञियायै नमः । ॐ यज्ञेश्वर्यै नमः । ॐ यतिपूज्यायै नमः ॥६९०॥ ॐ यदृच्छायै नमः । ॐ यवाशनायै नमः । ॐ यव्यायै नमः । ॐ यशःश्रियै नमः । ॐ यशस्कर्यै नमः । ॐ यशस्विन्यै नमः । ॐ यशोदायै नमः । ॐ यशोधनायै नमः । ॐ यशोधरायै नमः । ॐ यशोमत्यै नमः ॥७००॥ ॐ यागाधिष्ठात्र्यै नमः । ॐ यातनाहरायै नमः । ॐ यात्राशकुनायै नमः । ॐ युगपार्श्वगमात्रे नमः । ॐ योग्यायै नमः । ॐ रक्ताङ्ग्यै नमः । ॐ रक्षायै

नमः । ॐ रक्षोघ्न्यै नमः । ॐ रजोदात्र्यै नमः । ॐ रजःशुद्धायै नमः ।।७१०।। ॐ रत्नगर्भायै नमः । ॐ रमण्यै नमः । ॐ रमायै नमः । ॐ रम्यायै नमः । ॐ रम्भनकारिण्यै नमः । ॐ रसगर्भायै नमः । ॐ रसधेन्वै नमः । ॐ रसवत्यै नमः । ॐ रसायै नमः । ॐ राजराजेन्द्रसेवितायै नमः ।।७२०।। ॐ राधायै नमः । ॐ राधाकृष्णप्रियायै नमः । ॐ राधासहचर्यै नमः । ॐ रामार्चितायै नमः । ॐ राष्ट्रशक्त्यै नमः । ॐ राष्ट्रियायै नमः । ॐ रासेश्वर्यै नमः । ॐ रुग्घरायै नमः । ॐ रुच्यै नमः । ॐ रुचिरायै नमः ।।७३०।। ॐ रुच्यायै नमः । ॐ रुद्रपालितायै नमः । ॐ रुद्रमात्रे नमः । ॐ रुद्राण्यै नमः । ॐ रोगनाशिन्यै नमः । ॐ रोदस्यै नमः । ॐ रोहिण्यै नमः । ॐ रौद्रायै नमः । ॐ रौप्यखुरायै नमः । ॐ लक्षणायै नमः ।।७४०।। ॐ लक्ष्म्यै नमः । ॐ लक्ष्यायै नमः । ॐ लज्जायै नमः । ॐ ललितायै नमः । ॐ लाङ्गलीपूजितायै नमः । ॐ लालसायै नमः । ॐ लीलायै नमः । ॐ लूताविस्फोटहरायै नमः । ॐ लोकजनन्यै नमः । ॐ लोकेशायै नमः ।।७५०।। ॐ लोपामुद्रार्चितायै नमः । ॐ लोमशपूजितायै नमः । ॐ लोहितवर्णायै नमः । ॐ वंशवर्द्धिन्यै नमः । ॐ वत्सप्रसूत्यै नमः । ॐ वत्सलायै नमः । ॐ वत्सतरमात्रे नमः । ॐ वयस्यायै नमः । ॐ वरदायै नमः । ॐ वरवर्णिन्यै नमः ।।७६०।। ॐ वराङ्गायै नमः । ॐ वरारोहायै नमः । ॐ वरिवस्यार्हायै नमः । ॐ वरीयस्यै नमः । ॐ वरेण्यायै नमः । ॐ वर्यायै नमः । ॐ वशायै नमः । ॐ वषड्रूपायै नमः । ॐ वसिष्ठाराधितायै नमः । ॐ वसुदेवार्चितायै नमः ।।७७०।। ॐ वसुसुतायै नमः । ॐ वसुन्धरायै नमः । ॐ वसुमत्यै नमः । ॐ वाग्रूपिण्यै नमः । ॐ वाञ्छायै नमः । ॐ वाण्यै नमः । ॐ वात्सल्यमूर्त्यै नमः । ॐ वार्त्तायै नमः । ॐ वासनायै नमः । ॐ वासन्त्यै नमः ।।७८०।। ॐ विज्ञानायै नमः । ॐ विघ्नध्वान्तनिवारिण्यै नमः । ॐ विजयायै नमः । ॐ वित्तगर्भायै नमः । ॐ वित्ताध्यक्षायै नमः । ॐ विद्याप्रदायै नमः । ॐ विधिस्तुतायै नमः । ॐ विन्ध्यचारिण्यै नमः । ॐ विपद्धरायै नमः । ॐ विपाशायै नमः ।।७९०।। ॐ विपुलायै नमः । ॐ विप्रेज्यायै नमः । ॐ विप्रधनायै नमः । ॐ विप्रसगर्भ्यायै नमः । ॐ विभवायै नमः । ॐ विभावसुपथस्थितायै नमः । ॐ विभूत्यै नमः । ॐ विमलायै नमः । ॐ विमलप्रज्ञायै नमः । ॐ विलक्षणायै नमः ।।८००।। ॐ विशाखायै नमः । ॐ विशालायै नमः । ॐ विशोधिन्यै नमः । ॐ विश्वमायायै नमः । ॐ विश्वयोन्यै नमः । ॐ विश्वम्भरायै नमः । ॐ विश्वरूपायै नमः । ॐ विश्ववन्द्यायै नमः । ॐ विश्वविभूत्यै नमः । ॐ विषहरायै नमः ।।८१०।। ॐ विष्णुपदस्थितायै नमः । ॐ विष्णुविग्रहायै नमः । ॐ विष्वक्सेनप्रियङ्कर्यै नमः । ॐ विसृतस्तनायै नमः । ॐ विस्रसायै नमः । ॐ वीतिहोत्रप्रियङ्कर्यै नमः । ॐ वीर्यप्रदायै नमः । ॐ वेणुनादप्रियायै नमः । ॐ वेदलक्षणायै नमः । ॐ वेदवेद्यायै नमः ।।८२०।। ॐ वेहद्व्यै नमः । ॐ वैकुण्ठविहारिण्यै नमः । ॐ वैदिक्यै नमः । ॐ वैतरणीतरिण्यै नमः । ॐ वैष्णव्यै नमः । ॐ वृत्त्यै नमः । ॐ वृत्तिदायै नमः । ॐ वृद्धायै नमः । ॐ वृद्ध्यै नमः । ॐ वृद्धोक्षमात्रे नमः ।।८३०।। ॐ वृद्धोक्षप्रियायै नमः । ॐ वृन्दावनविहारिण्यै नमः । ॐ वृन्दावनसमुद्भवायै नमः । ॐ वृषस्यन्त्यै नमः । ॐ वृषवल्लभायै नमः । ॐ वृषप्रियायै नमः । ॐ वृषाक्रान्तायै नमः । ॐ वृष्णिकुलपूजितायै नमः । ॐ व्यापकायै नमः । ॐ व्यासार्चितायै नमः ।।८४०।। ॐ व्रजधनायै नमः । ॐ व्रजवासिन्यै नमः । ॐ व्रज्यायै नमः । ॐ व्रणहरायै नमः । ॐ व्रतरक्षिण्यै नमः । ॐ शक्त्यै नमः । ॐ शक्यायै नमः । ॐ शचीप्रियायै नमः । ॐ शचीपतिस्तुतायै नमः । ॐ शनैश्चरायै नमः ।।८५०।। ॐ शफवत्यै नमः । ॐ शबल्यै नमः । ॐ शरण्यायै नमः । ॐ शर्कराधेन्वै नमः । ॐ शर्वाण्यै नमः । ॐ शस्यमूलायै नमः । ॐ शायवत्यै नमः । ॐ शान्तायै नमः । ॐ शान्त्यै नमः । ॐ शान्तिदायै नमः ।।८६०।। ॐ शास्त्रगर्भायै नमः । ॐ शिक्षायै नमः:

। ॐ शिञ्जिनीपादायै नमः । ॐ शीलवत्यै नमः । ॐ शुक्रवर्द्धिन्यै नमः। ॐ शुक्लायै नमः । ॐ शुच्यै नमः । ॐ शुभगत्यै नमः । ॐ शुभाननायै नमः । ॐ शुभदर्शनायै नमः ॥८७०॥ ॐ शुभलक्षणायै नमः । ॐ शुभाङ्ग्यै नमः । ॐ शुभ्रायै नमः । ॐ शुश्रूषार्हायै नमः । ॐ शून्यरूपायै नमः । ॐ शोभनायै नमः । ॐ शोभायै नमः । ॐ शौर्यदायै नमः । ॐ श्यामायै नमः । ॐ श्यामप्रियायै नमः ॥८८०॥ ॐ श्रद्धायै नमः । ॐ श्राद्धधनायै नमः । ॐ श्रियै नमः । ॐ श्रीदायै नमः । ॐ श्रीदत्तसेवितायै नमः । ॐ श्रीमत्यै नमः । ॐ श्रुतिरूपायै नमः । ॐ श्रुतिसिद्धायै नमः । ॐ श्रुतिसेवितायै नमः । ॐ श्रेयस्यै नमः ॥८९०॥ ॐ श्रेष्ठायै नमः । ॐ श्रृङ्गिण्यै नमः । ॐ श्वेतपिङ्गलायै नमः । ॐ सख्यायै नमः । ॐ संसिद्धिहेतुकायै नमः । ॐ संस्कृतार्चितायै नमः । ॐ संस्थाध्यक्षायै नमः । ॐ सच्चिदानन्दरूपिण्यै नमः । ॐ सत्यवाक्कर्यै नमः। ॐ सत्यै नमः ॥९००॥ ॐ सदसत्स्वरूपिण्यै नमः । ॐ सदाक्षीरायै नमः । ॐ सनातन्यै नमः । ॐ सन्धिन्यै नमः । ॐ सन्ध्यायै नमः । ॐ सपर्यायै नमः । ॐ सफलायै नमः । ॐ सभर्तृकायै नमः । ॐ सभ्यायै नमः । ॐ सुमङ्गलायै नमः ॥९१०॥ ॐ समङ्गायै नमः । ॐ समग्रायै नमः । ॐ समज्ञायै नमः । ॐ समर्थायै नमः । ॐ समृद्ध्यै नमः । ॐ सम्पत्त्यै नमः । ॐ सम्पत्कर्यै नमः । ॐ सम्राज्ञ्यै नमः । ॐ सरलायै नमः । ॐ सरस्वत्यै नमः ॥९२०॥ ॐ सर्पिर्मूलायै नमः । ॐ सर्वकामदुघायै नमः । ॐ सर्वकारणायै नमः । ॐ सर्वतीर्थमय्यै नमः । ॐ सर्वतीर्थाभिषेचिन्यै नमः । ॐ सर्वतोभद्रायै नमः । ॐ सर्वदेवमय्यै नमः । ॐ सर्ववेदमय्यै नमः । ॐ सर्वप्राणिहितैषिण्यै नमः । ॐ सर्वमतार्चितायै नमः ॥९३०॥ ॐ सर्वमङ्गलायै नमः । ॐ सर्वाभरणभूषितायै नमः । ॐ सर्वेश्वर्यै नमः । ॐ सर्वरक्षणतत्परायै नमः । ॐ सर्वरत्नमय्यै नमः । ॐ सर्वशक्त्यै नमः । ॐ सर्वसहायै नमः । ॐ सर्वाङ्गशोभनायै नमः । ॐ सवत्सायै नमः । ॐ साकेतविलासिन्यै नमः ॥९४०॥ ॐ साधीयस्यै नमः । ॐ साध्यायै नमः । ॐ साध्व्यै नमः । ॐ सास्नावत्यै नमः । ॐ सिद्धान्तरक्षिण्यै नमः । ॐ सिद्धायै नमः । ॐ सिद्धसेवितायै नमः । ॐ सिद्धार्थकर्यै नमः । ॐ सिद्ध्यै नमः । ॐ सिन्दूरार्चितायै नमः ॥९५०॥ ॐ सीतासेवितायै नमः । ॐ सीतामूलायै नमः । ॐ सुकरायै नमः । ॐ सुखदायै नमः । ॐ सुगन्धायै नमः । ॐ सुचरित्रायै नमः । ॐ सुदक्षिणार्चितायै नमः । ॐ सुधास्तन्यै नमः । ॐ सुधीपूज्यायै नमः । ॐ सुभगायै नमः ॥९६०॥ ॐ सुभद्रायै नमः । ॐ सुरासुरनुतायै नमः । ॐ सुरभिगन्धिन्यै नमः । ॐ सुरेशाराधितायै नमः । ॐ सुवर्णवर्णायै नमः । ॐ सुव्रतायै नमः । ॐ सुशीलायै नमः । ॐ सुषमायै नमः । ॐ सूनृतायै नमः । ॐ सूर्यमण्डलमण्डितायै नमः ॥९७०॥ ॐ सृष्ट्यै नमः । ॐ सृष्टिस्थितिसंहारकारिण्यै नमः । ॐ सेव्यायै नमः । ॐ सैन्धवारण्यचारिण्यै नमः । ॐ सौम्यमुख्यै नमः । ॐ सौम्यायै नमः । ॐ सौम्येक्षणायै नमः । ॐ सौरभेय्यै नमः । ॐ सौर्यायै नमः । ॐ स्फुरणायै नमः ॥९८०॥ ॐ स्तनवत्यै नमः । ॐ स्तुत्यै नमः । ॐ स्तुतिप्रियायै नमः । ॐ स्थिरायै नमः । ॐ स्थित्यै नमः । ॐ स्थूलायै नमः । ॐ स्थूलकुचायै नमः । ॐ स्निग्धायै नमः । ॐ स्पृश्यायै नमः । ॐ स्मृत्यै नमः ॥९९०॥ ॐ स्रग्धरायै नमः । ॐ स्रवद्दर्भायै नमः । ॐ स्वच्छन्दचारिण्यै नमः । ॐ स्वतन्त्रायै नमः । ॐ स्वधायै नमः । ॐ स्वाहायै नमः । ॐ स्वयम्भुवायै नमः । ॐ स्वयंवरायै नमः । ॐ स्वर्गव्यै नमः । ॐ स्वर्गाधिरोहिण्यै नमः ॥१०००॥ ॐ स्वर्गपूज्यायै नमः । ॐ स्वर्ग्यायै नमः । ॐ स्वधामदायै नमः । ॐ स्वर्णकपिलायै नमः । ॐ हविर्धान्यै नमः । ॐ हव्यभुक्तायै नमः । ॐ हेमश्रृङ्ग्यै नमः । ॐ होमधेन्वै नमः । ॐ ह्रीङ्कारारूपिण्यै नमः ॥१००९॥ ॐ

इति गङ्गाधरपाठकमैथिलविरचिता श्रीसुरभ्यष्टोत्तरसहस्रनाममालिका सम्पूर्णा ।

# श्रीसुरभ्यष्टोत्तरशतनाममालिका

## सङ्कल्पः

ॐ अद्य पुष्यादिना श्रीसुरभ्यष्टोत्तरशतनामभिः श्रीसुरभिपूजनमहं करिष्ये ।

## विनियोगः

अस्याः श्रीसुरभ्यष्टोत्तरशतनामावल्याः शिवऋषिरनुष्टुप्छन्दः
सुरभिर्देवता सुरभिप्रीतिपूर्वकं सर्वाभीष्टसिद्ध्यर्थं श्रीसुरभिपूजने विनियोगः ।

## ध्यानम्

**नमोऽस्तु धेन्वै च नमः सुरभ्यै शक्त्यै नमः सर्वजगज्जनन्यै ।**
**देव्यै जगद्रक्षणतत्परायै सुधार्णवायै च नमो नमस्ते ॥**

ॐ गवे नमः । ॐ धेन्वै नमः । ॐ सुरभ्यै नमः । ॐ मात्रे नमः । ॐ वत्सलायै नमः । ॐ अघ्न्यायै नमः । ॐ पयस्विन्यै नमः । ॐ पवित्रायै नमः । ॐ श्रीमत्यै नमः । ॐ सौम्यायै नमः ॥१०॥ ॐ सच्चिदानन्दरूपिण्यै नमः । ॐ रोहिण्यै नमः । ॐ कपिलायै नमः । ॐ नन्दायै नमः । ॐ पुण्यायै नमः । ॐ गन्धवहायै नमः । ॐ शुच्यै नमः । ॐ श्यामायै नमः । ॐ सनातनायै नमः । ॐ प्राणायै नमः ॥२०॥ ॐ सुभगायै नमः । ॐ सर्वरूपिण्यै नमः । ॐ अनन्तायै नमः । ॐ अनन्तसम्पूज्यायै नमः । ॐ अनन्तक्षीरदायिन्यै नमः । ॐ अशेषाघहरायै नमः । ॐ नित्यायै नमः । ॐ नित्यगोलोकवासिन्यै नमः । ॐ हव्यकव्यप्रदायै नमः । ॐ शुद्धायै नमः ॥३०॥ ॐ कामधेन्वै नमः । ॐ सुधार्णवायै नमः । ॐ भवदुःखहरक्षीरायै नमः । ॐ वृन्दारण्यसमुद्भवायै नमः । ॐ शबलायै नमः । ॐ अजसुतायै नमः । ॐ दिव्यायै नमः । ॐ श्रुतिरूपायै नमः । ॐ समुद्रजायै नमः । ॐ श्रुतिसिद्धायै नमः ॥४०॥ ॐ जगन्मात्रे नमः । ॐ पद्मांशायै नमः । ॐ चारुरूपिण्यै नमः । ॐ चतुर्वर्गप्रदायै नमः । ॐ अव्यङ्गायै नमः । ॐ सर्वावयवशोभनायै नमः । ॐ परायै नमः । ॐ अपरायै नमः । ॐ वरेण्यायै नमः । ॐ सीतारामप्रपूजितायै नमः ॥५०॥ ॐ राधाकृष्णप्रियायै नमः । ॐ मान्यायै नमः । ॐ माध्व्यै नमः । ॐ क्षीरसरोवरायै नमः । ॐ कल्याण्यै नमः । ॐ माधव्यै नमः । ॐ शोभायै नमः । ॐ सुशीलायै नमः । ॐ शुभलक्षणायै नमः । ॐ अदित्यै नमः ॥६०॥ ॐ नन्दिन्यै नमः । ॐ सौर्यायै नमः । ॐ समङ्गायै नमः । ॐ यज्ञकारणायै नमः । ॐ मनोरमायै नमः । ॐ अमृतनाभ्यै नमः । ॐ वशायै नमः । ॐ विष्णुपदस्थितायै नमः । ॐ भयघ्न्यै नमः । ॐ बहुलायै नमः ॥७०॥ ॐ दोग्ध्र्यै नमः । ॐ मङ्गलायै नमः । ॐ बहुदोहिन्यै नमः । ॐ ऊर्जस्विन्यै नमः । ॐ महादेव्यै नमः । ॐ शरण्यायै नमः। ॐ शुभदर्शनायै नमः। ॐ आदित्यभगिन्यै नमः । ॐ रुद्रमात्रे नमः । ॐ वसुसुतायै नमः ॥८०॥ ॐ अमृतायै नमः । ॐ चतुष्पादयुतायै नमः । ॐ धर्मस्वरूपायै नमः । ॐ पितृतारिकायै नमः । ॐ शुभाननायै नमः । ॐ शुभायै नमः। ॐ शान्त्यै नमः। ॐ चारुशृङ्गायै नमः । ॐ करीषिण्यै नमः । ॐ गलकम्बलवत्यै नमः ॥९०॥ ॐ पूज्यायै नमः । ॐ पुच्छिन्यै नमः । ॐ बहुरूपिण्यै नमः । ॐ अर्जुन्यै नमः । ॐ उस्रायै नमः । ॐ माहेय्यै नमः । ॐ बुद्धिदायै नमः । ॐ बलदायै नमः । ॐ अनघायै नमः । ॐ चिन्तामण्यै नमः ॥१००॥ ॐ अचिन्त्यायै नमः । ॐ चिन्त्यायै नमः । ॐ चिदचिदात्मिकायै नमः । ॐ सत्यायै नमः । ॐ प्रजावत्यै नमः । ॐ पूर्णायै नमः । ॐ कल्पवृक्षस्वरूपिण्यै नमः । ॐ हरिभक्तिप्रदायै नमः । ॐ हरिसान्निध्यकारिण्यै नमः ॥१०९॥ ॐ

इति गङ्गाधरपाठकमैथिलविरचिता श्रीसुरभ्यष्टोत्तरशतनाममालिका सम्पूर्णा ।

# गोपुच्छतर्पणम्

**(धेनुपुच्छं करे कृत्वा तर्पणं च करोति यः । आत्मानं तारयेद्विप्रो दश पूर्वान्दशापरान् ॥
देवर्षिपितरस्तृप्ता गोपुच्छोदकतर्पणैः । आयुर्वृद्धिं तथा तुष्टिं मेधां प्रज्ञां च सन्ततिम् ।
आरोग्यं धनलाभं च श्रद्धां भक्तिं ददन्ति हि ॥)**

(जो द्विज गोपुच्छ को हाथ में लेकर देवता, ऋषि एवं पितर आदि का तर्पण करता है वह स्वयं का, दस पूर्वजों का तथा दस आनेवाली पीढ़ी- यानी अपनी इक्कीस पीढ़ी का उद्धार कर देता है । गोपुच्छजल के तर्पण से तृप्त हुए देवता, ऋषि एवं पितर आदि तर्पण करनेवाले के लिये आयु की वृद्धि, तुष्टि, मेधा, प्रज्ञा, सन्तति, आरोग्य, धनलाभ, श्रद्धा और भक्ति प्रदान करते हैं ।)

**सवत्सगोपूजनानन्तरं गोपुच्छतर्पणार्थे कुशपवित्रे धारयित्वा आचमनप्राणायामादिकं कृत्वा दक्षिणहस्ते जलत्रिकुशादिकमादाय संकल्पं कुर्यात्** (सवत्सगोपूजन के बाद गोपुच्छतर्पण हेतु दायें हाथ की अनामिका में दो कुशाओं की एवं बायें हाथ की अनामिका में तीन कुशाओं की पवित्री धारण करके आचमन-प्राणायाम आदि करे और दायें हाथ में जल, त्रिकुशा आदि लेकर संकल्प करे)

### संकल्पः

**ॐ अद्य अमुकमासे अमुकपक्षे अमुकतिथौ अमुकवासरे अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) गोप्रीतिपूर्वकं देवर्षिपित्रादितृप्त्यर्थं गोपुच्छतर्पणमहं करिष्ये ।**

## गोपुच्छे देवतर्पणम्

(**हस्ते सत्रिकुशाक्षतयवपुष्पं गोपुच्छं गृहीत्वा प्राङ्मुखः सव्यो यजमानः सन्ततजलधारया पूर्वं देवतीर्थेन रजतादिपात्रे एकैकांजलिना देवाँस्तर्पयेत्** (हाथ में त्रिकुश, अक्षत, जौ और पुष्प सहित गोपुच्छ को ग्रहण कर पूर्वाभिमुख सव्य होकर यजमान सतत जलधारा के द्वारा पहले देवतीर्थ से रजतादि पात्र में एक-एक अंजलि देते हुए देवताओं का तर्पण करे)

**ओम् तर्पणीयाः देवाः आगच्छन्तु ।**

**या नन्दिनीसुशीलाद्याः कामदाश्चैव धेनवः ।
ताः सर्वाः पुच्छतोयेन तर्पितास्तर्पयन्तु माम् ॥**

**ॐ ब्रह्मा तृप्यताम् । ॐ विष्णुस्तृप्यताम् । ॐ महादेवस्तृप्यताम् । ॐ कार्त्तिकेयस्तृप्यताम् । ॐ गणाधिपस्तृप्यताम् । ॐ पुष्पचापस्तृप्यताम् । ॐ महेन्द्रस्तृप्यताम् । ॐ अच्युताग्रजस्तृप्यताम् । ॐ सगणवाहनपरिच्छदा देवास्तृप्यन्ताम् । ॐ वसवस्तृप्यन्ताम् । ॐ आदित्यास्तृप्यन्ताम् । ॐ रुद्रास्तृप्यन्ताम् । ॐ विश्वेदेवास्तृप्यन्ताम् । ॐ साध्यास्तृप्यन्ताम् । ॐ मरुतस्तृप्यन्ताम् । ॐ मातरस्तृप्यन्ताम् । ॐ गन्धर्वास्तृप्यन्ताम् । ॐ गुह्यकास्तृप्यन्ताम् । ॐ सागरास्तृप्यन्ताम् । ॐ सरितस्तृप्यन्ताम् । ॐ राक्षसास्तृप्यन्ताम् । ॐ यक्षास्तृप्यन्ताम् । ॐ वेतालास्तृप्यन्ताम् । ॐ पूतनास्तृप्यन्ताम् । ॐ पर्वतास्तृप्यन्ताम् । ॐ द्रुमास्तृप्यन्ताम् । ॐ तीर्थानि तृप्यन्ताम् । ॐ अप्सरसस्तृप्यन्ताम् । ॐ पशवस्तृप्यन्ताम् ।**

**ॐ पन्नगास्तृप्यन्ताम् । ॐ खगास्तृप्यन्ताम् । ॐ ऋक्षाणि तृप्यन्ताम् । ॐ राशयस्तृप्यन्ताम् । ॐ योगास्तृप्यन्ताम् । ॐ मासास्तृप्यन्ताम् । ॐ संवत्सरस्तृप्यताम् । ॐ ऋतवस्तृप्यन्ताम् । ॐ वासरास्तृप्यन्ताम् । ॐ अयने तृप्येताम् । ॐ युगास्तृप्यन्ताम् । ॐ कल्पास्तृप्यन्ताम् । ॐ मन्वन्तराणि तृप्यन्ताम् । ॐ भुवनानि तृप्यन्ताम् । ॐ दिशौकास्तृप्यन्ताम् । ॐ इन्द्रियाणि तृप्यन्ताम् । ॐ ओंकारस्तृप्यताम् । ॐ गायत्री तृप्यताम् । ॐ छन्दांसि तृप्यन्ताम् । ॐ वेदांगानि तृप्यन्ताम् । ॐ वेदास्तृप्यन्ताम् । ॐ स्मृतयस्तृप्यन्ताम् । ॐ पुराणानि तृप्यन्ताम् । ॐ आयुर्वेदस्तृप्यताम् । ॐ धनुर्वेदस्तृप्यताम् । ॐ गान्धर्ववेदस्तृप्यताम् । ॐ मन्त्रगहवरस्तृप्यताम् । ॐ वनौषधयस्तृप्यन्ताम् । ॐ सपिप्पलग्राम्यौषधयस्तृप्यन्ताम् । ॐ सानुगा देवतास्तृप्यन्ताम् । ॐ सगणा मुनयस्तृप्यन्ताम् । ॐ सपत्नीका ऋषयस्तृप्यन्ताम् । ॐ सगणाः सिद्धास्तृप्यन्ताम् । ॐ प्रजास्तृप्यन्ताम् । ॐ प्रजापतिस्तृप्यताम् । ॐ विघ्नविनायकास्तृप्यन्ताम् । ॐ विद्याधरास्तृप्यन्ताम् । ॐ दैत्यास्तृप्यन्ताम् । ॐ आचार्यास्तृप्यन्ताम् । ॐ गुरवस्तृप्यन्ताम् । ॐ डाकिन्यस्तृप्यन्ताम् । ॐ क्षेत्रपालस्तृप्यताम् । ॐ भैरवास्तृप्यन्ताम् । ॐ स्थावरास्तृप्यन्ताम् । ॐ जंगमास्तृप्यन्ताम् । ॐ भूतग्रामश्चतुर्विधस्तृप्यताम् । ॐ ग्रहास्तृप्यन्ताम् । ॐ दिक्पालास्तृप्यन्ताम् । ॐ सावित्री तृप्यताम् । ॐ सलक्ष्मीकचतुर्विधलोकेशस्तृप्यताम् । ॐ उमामहेश्वरौ तृप्येताम् । ॐ अत्रिस्तृप्यताम् । ॐ वसिष्ठस्तृप्यताम् । ॐ भृगुस्तृप्यताम् । ॐ गोतमस्तृप्यताम् । ॐ मरीचिस्तृप्यताम् । ॐ दक्षस्तृप्यताम् । ॐ पुलहस्तृप्यताम् । ॐ पुलस्त्यस्तृप्यताम् । ॐ प्राचेतसस्तृप्यताम् । ॐ कश्यपस्तृप्यताम् । ॐ विश्वामित्रस्तृप्यताम् । ॐ भरद्वाजस्तृप्यताम् । ॐ जमदग्निस्तृप्यताम् । ॐ अन्ये मुनिपुंगवास्तृप्यन्ताम् ।**

## गोपुच्छे दिव्यमनुष्यतर्पणम्

**ततः उत्तराभिमुखः यज्ञोपवीतं कण्ठावलम्बितं कृत्वा अक्षतकुशजलैर्मनुष्यतीर्थेन अंजलिद्वयेन ऋषींस्तर्पयेत्** (इसके बाद उत्तरमुख हो यज्ञोपवीत को माला के समान बनाकर अक्षत, कुश और जल के द्वारा मनुष्यतीर्थ से ऋषियों का दो-दो बार तर्पण करे)

**ओम् सनकादयः आगच्छन्तु ।**

**ॐ सनकस्तृप्यताम् २ । ॐ सनन्दनस्तृप्यताम् २ । ॐ सनत्कुमारस्तृप्यताम् २ । ॐ सनातनस्तृप्यताम् २ । ॐ कपिलस्तृप्यताम् २ । ॐ आसुरिस्तृप्यताम् २ । ॐ वोढुस्तृप्यताम् २ । ॐ पंचशिखस्तृप्यताम् २ ।**

## गोपुच्छे दिव्यपितृतर्पणम्

**ततो दक्षिणाभिमुखः अपसव्यं कृत्वा द्विगुणितकुशतिलजलैः पितृतीर्थेन यजुर्वेदी वारत्रयं सामवेदी सकृत्सकृत् दिव्यपितृगणांस्तर्पयेत्** (पुनः दक्षिणाभिमुख अपसव्य होकर मोटक कुश, तिल और जल के द्वारा पितृतीर्थ से यजुर्वेदी तीन-तीन बार और सामवेदी एक-एक बार दिव्य पितरों का तर्पण करे।)

विशेष (**कव्यवाडं नलं सौम्यं यममर्यमणं तथा । अग्निष्वात्ता: सोमपाश्च बर्हिषद: सकृत्सकृत् ।।) वाचस्पत्ये छन्दोगपरिशिष्टवचनम् ।** यजुर्वेदी **ॐ कव्यवाडनलस्तृप्यताम्** से तीन बार और सामवेदी **ॐ कव्यवाट् तृप्यताम्** तथा **ॐ नलस्तृप्यताम्** को पृथक् करके एक-एक बार तर्पण करे ।

**ओम् अग्निष्वात्तादय: आगच्छन्तु ।**

**ॐ कव्यवाडनलस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नम: ३** या **१ । ॐ सोमस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नम: ३** या **१ । ॐ यमस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा नम: ३** या **१ । ॐ अर्यमा तृप्यतामिदं सतिलं जलं तस्मै स्वधा नम: ३** या **१ । ॐ अग्निष्वात्तास्तृप्यन्तामिदं सतिलं जलं तेभ्य: स्वधा नम: ३** या **१ । ॐ सोमपास्तृप्यन्तामिदं सतिलं जलं तेभ्य: स्वधा नम: ३** या **। ॐ बर्हिषदस्तृप्यन्तामिदं सतिलं जलं तेभ्य: स्वधा नम: ३** या **१ ।**

**(तर्पितास्तृप्तिमायान्तु शाश्वतीं गोप्रसादत:।)**

## गोपुच्छे यमतर्पणम् (पक्षान्तरे)

**ओम् यमादय: आगच्छन्तु ।**

**ॐ यमाय नम: ३ । ॐ धर्मराजाय नम: ३ । ॐ मृत्यवे नम: ३ । ॐ अन्तकाय नम: ३ । ॐ वैवस्वताय नम: ३ । ॐ कालाय नम: ३ । ॐ सर्वभूतक्षयाय नम: ३ । ॐ औदुम्बराय नम: ३ । दध्नाय नम: ३ । ॐ नीलाय नम: ३ । ॐ परमेष्ठिने नम: ३ । ॐ वृकोदराय नम: ३ । ॐ चित्राय नम: ३ । ॐ चित्रगुप्ताय नम: ३ ।**

**(चतुर्दशैते यमा: स्वस्ति कुर्वन्तु सर्वदा) ।**

## गोपुच्छे मनुष्यपितृतर्पणम्

(पिता आदि को प्रणाम करे)

**पिता पितामहश्चैव तथैव प्रपितामह: । माता पितामही चैव तथैव प्रपितामही ।। मातामह: प्रमातामहो वृद्धप्रमातामहस्तथा । मातामही प्रमातामही वृद्धप्रमातामही तथा । अक्षय्यां तृप्तिमायान्तु गोलांगूलच्युतोदकै: ।। त्रिकं मातामहाद्यं च मातामह्यादिकं त्रयम् । ते च ताश्च प्रदत्तं मे स्वीकुर्वन्तु जलं मुदा ।।**

(पूर्व की भाँति पितृतीर्थ से पितरों को तीन-तीन अंजलि दे)

**ओम् आगच्छन्तु मे पितर: गृह्णन्तु गोपुच्छतर्पणम् ।**

**ॐ अद्य अमुकगोत्र: पिता अमुकशर्मा (वर्मा, गुप्त:) वसुरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा ३ । ॐ अद्य अमुकगोत्र: पितामह:** (दादा) **अमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा ३ । ॐ अद्य अमुकगोत्र: प्रपितामह:** (परदादा) **अमुकशर्मा आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा ३ ।**

**ॐ तृप्यध्वम् ॐ तृप्यध्वम् ॐ तृप्यध्वम्**

**ॐ अद्य अमुकगोत्रा माता अमुकदेवी गायत्रीरूपा तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ । ॐ अद्य अमुकगोत्रा पितामही** (दादी) **अमुकदेवी सावित्रीरूपा तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ । ॐ अद्य अमुकगोत्रा प्रपितामही** (परदादी) **अमुकदेवी सरस्वतीरूपा तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ ।**

(यदि सौतेली माता मर गयी हो तो उनको भी तीन या एक बार जल दे)

**ॐ अद्य अमुकगोत्रा सापत्नमाता अमुकदेवी तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ ।**

## गोपुच्छे मातामहादितर्पणम्

**ॐ अद्य अमुकगोत्रः मातामहः** (नाना) **अमुकशर्मा वसुरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा ३ । ॐ अद्य अमुकगोत्रः प्रमातामहः** (परनाना) **अमुकशर्मा रुद्ररूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा ३ । ॐ अद्य अमुकगोत्रः वृद्धप्रमातामहः** (वृद्धपरनाना) **अमुकशर्मा आदित्यरूपस्तृप्यतामिदं सतिलं जलं तस्मै स्वधा ३ ।**

**ॐ तृप्यध्वम् ॐ तृप्यध्वम् ॐ तृप्यध्वम्**

**ॐ अद्य अमुकगोत्रा मातामही** (नानी) **अमुकदेवी गायत्रीरूपा तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ । ॐ अद्य अमुकगोत्रा प्रमातामही** (परनानी) **अमुकदेवी सावित्रीरूपा तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ । ॐ अद्य अमुकगोत्रा वृद्धप्रमातामही** (वृद्धपरनानी) **अमुकदेवी सरस्वतीरूपा तृप्यतामिदं सतिलं जलं तस्यै स्वधा ३** या **१ ।**

(पुनः सभी आप्त मृत सम्बन्धियों के निमित्त सतत जलधारा दे)

**ये मृता वै पितृव्याश्च मातुलाः श्वसुरास्तथा । आचार्य्या गुरुमित्राद्यास्ते गृह्णन्तु शुभं जलम् ।। ये च सम्बन्धिनोऽपुत्रा अग्निदाहविवर्जिताः । अपमृत्युमृता ये च तृप्तिं ते च लभन्त्विह ।। पितृवंशे मृता ये च मातृवंशे च ये मृताः । गुरुश्वसुरबन्धूनां ये चान्ये बान्धवा मृताः ।। ये मे कुले लुप्तपिण्डाः क्रियालोपगताश्च ये । विरूपा आमगर्भाश्च ज्ञाताज्ञाताः कुले मम । ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पणैः ।। गोत्रे मदीये विसुता मृता ये गोत्रे च मातुर्मम ये विपन्नाः । गर्भच्युताः श्राद्धविवर्जिताश्च तेभ्यः स्वधाऽन्नेन जलेन कृत्वा ।। भृग्वग्निवज्रादिजलादिशस्त्रैर्विषाणदन्तैर्नखरैर्भुजंगैः । पंचत्वभावं विगताश्च ये च तेभ्यः प्रदत्तं शिवमस्तु तोयम् ।। ये रौरवादौ नरके निमग्नाः क्रियाविलुप्ताश्च कृतोपकाराः । जन्मान्तरे ये मम दासभूतास्तेऽप्यक्षयां तृप्तिमिहाभजन्तु ।। ये बान्धवाऽबान्धवा वा येऽन्यजन्मनि बान्धवाः । ते सर्वे तृप्तिमायान्तु गोपुच्छोत्सृष्टवारिभिः ।।**

गोपुच्छतर्पण में तर्पणांग **वस्त्रनिष्पीडन** कृताकृत है । **भीष्मतर्पण** माघशुक्लाष्टमी में करने का विधान है ।

(पुनः सबको प्रणाम करे)

**सन्तर्पिता मया ये च गोपुच्छोदकतर्पणैः ।**
**आयुर्वृद्धिं तथा तुष्टिं मेधां प्रज्ञां च सन्ततिम् ।**
**आरोग्यं धनलाभं च सन्तुष्टाश्च ददन्तु मे ।।**

**इति गोपुच्छोदकेन तर्पणं विधाय आचम्य सूर्यायार्घ्यं दत्वा प्रणम्य कांस्यमये आज्यपात्रे घृतदिग्धं कुशस्वर्णयुतगोपुच्छं तिलत्रिकुशयुतोदङ्मुखब्राह्मणपाणौ कृत्वा गोदानार्थं गोमूल्यदानार्थं वा संकल्पयेत् ।** (इस प्रकार गोपुच्छोदक से तर्पण करके आचमन कर सूर्य को अर्घ्य देकर प्रणाम करे और कांस्यमय आज्यपात्र में घृतलिप्त कुश और स्वर्ण युक्त गोपुच्छ को तिल, त्रिकुश से युक्त हो उत्तराभिमुख ब्राह्मण के हाथ में देकर गोदान या गोमूल्यदान का संकल्प कर त्रिकुश पर रखे)

## संकल्पः

**ओमद्य गोपुच्छतर्पणनिमित्तकं सवत्सगोदानं (यथोपकल्पितं गोमूल्यदानं, गोग्रासदानं वा) करिष्ये ।**

### दानसंकल्पः

**ओमद्य अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) समस्तदेवर्षिपित्रादितृप्तिकामः इमां गां रुद्रदैवतां (इदं यथोपकल्पितं गोमूल्यं रुद्रदैवतं वा) यथानामगोत्राय ब्राह्मणाय दातुमहमुत्सृज्ये ।**

### गोदानदक्षिणासंकल्पः

**ओमद्य कृतैतद् गोपुच्छतर्पणनिमित्तकगोदान(गोमूल्यदान)प्रतिष्ठार्थम् एतावद् द्रव्यमूल्यकं हिरण्यम् अग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृज्ये ।**

### गोग्रासदानसंकल्पः

**ओमद्य अमुकगोत्रः अमुकशर्मा (वर्मा, गुप्तः) सर्वाभ्युदयद्वारागोवंशसंरक्षणसंवर्द्धनार्थं वर्षं यावत् (मासं यावत् वा) एतत्संख्यकसमस्तदेवर्षिपित्रादिविग्रहगोतृप्तिकामः इमं ग्रासं (इदं ग्रासमूल्यं वा) वनस्पतिदैवतं (विष्णुदैवतं वा) यथानामगोत्राय ब्राह्मणाय (मनसोद्दिष्टायै गवे वा) दातुमहमुत्सृज्ये ।**

### गोग्रासदानदक्षिणासंकल्पः

**ओमद्य कृतैतद् गोपुच्छतर्पणनिमित्तकगोग्रासदानप्रतिष्ठार्थम् (गोग्रासमूल्यदानप्रतिष्ठार्थं वा) एतावद् द्रव्यमूल्यकं हिरण्यम् अग्निदैवतं यथानामगोत्राय ब्राह्मणाय दक्षिणां दातुमहमुत्सृज्ये ।**

### अर्पणम्

**अनेन कृतेन गोपूजनादिकर्मणा सच्चिदानन्दरूपिणी भगवती श्रीसुरभिः प्रीयताम्, न मम ।**

(भगवान् को प्रणाम करके शान्तिपाठ करे)

**यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु ।**
**न्यूनं सम्पूर्णतां यातु सद्यो वन्दे तमच्युतम् ।।**

**ओम् शान्तिः शान्तिः शान्तिः**